# अथ श्रीमद्भगवद्गीताध्यानम् ।

## श्रीगोपालकृष्णाय नमः ।

ॐ पार्थाय प्रतिबोधितां भगवता नारायणेन स्वयं व्यासेन ग्रथितां पुराणमुनिना मध्येमहाभारतम् ॥ अद्वैतामृतवर्षिणीं भगवतीमष्टादशाध्यायिनीमम्ब त्वामनुसंदधामि भगवद्गीते भवद्वेषिणीम् ॥ १ ॥ नमोऽस्तु ते व्यास विशालबुद्धे फुल्लारविन्दायतपत्रनेत्र ॥ येन त्वया भारततैलपूर्णः प्रज्वालितो ज्ञानमयः प्रदीपः ॥ २ ॥ प्रपन्नपारिजाताय तोत्रवेत्रैकपाणये ॥ ज्ञानमुद्राय कृष्णाय गीतामृतदुहे नमः ॥ ३ ॥ सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ॥ पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥ ४ ॥ वसुदेवसुतं देवं कंसचाणूरमर्दनम् ॥ देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम् ॥ ५ ॥ भीष्मद्रोणतटा जयद्रथजला गान्धारनीलोपला शल्यग्राहवती कृपेण वहनी कर्णेन वेलाकुला ॥ अश्वत्थामविकर्णघोरमकरा दुर्योधनावर्तिनी सोत्तीर्णा खलु पाण्डवै रणनदी कैवर्तकः केशवः ॥ ६ ॥ पाराशर्यवचः सरोजममलं गीतार्थगन्धोत्कटं नानाख्यानककेसरं हरिकथासंबोधनाबोधितम् ॥ लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा भूयाद्भारतपङ्कजं कलिमलप्रध्वंसिनः श्रेयसे ॥ ७ ॥ मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् । यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥ ८ ॥ यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैर्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ॥ ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥ ९ ॥

इति श्रीमद्भगवद्गीताध्यानम् ॥

# भगवद्गीता ।

## श्रीधरीव्याख्यासवलिता ।

### प्रथमोऽध्यायः ।

॥ ॐ नमो भगवते वासुदेवाय ॥

शेषाशेषमुखव्याख्याचातुर्यं त्वेकवक्त्रतः ।
दधानमद्भुतं वन्दे परमानन्दमाधवम् ॥ १ ॥
श्रीमाधवं प्रणम्योमाधवं विश्वेशमादरात् ।
तद्भक्तियन्त्रितः कुर्वे गीताव्याख्यां सुबोधिनीम् ॥ २ ॥
भाष्यकारमतं सम्यक् तद्व्याख्यातृगिरस्तथा ।
यथामति समालोच्य गीताव्याख्यां समारभे ॥ ३ ॥
गीता व्याख्यायते यस्याः पाठमात्रादयत्नतः ।
सेयं सुबोधिनी टीका सदा ध्येया मनीषिभिः ॥ ४ ॥

इह खलु सकललोकहितावतारः सकलवन्दितचरणः परमकारुणिको भगवान् देवकीनन्दनस्तत्त्वाज्ञानविजृम्भितशोकमोहविभ्रंशितविवेकतया निजधर्मत्यागपरधर्माभिसंधिपरमर्जुनं धर्मज्ञानरहस्योपदेशप्लवेन तस्माच्छोकमोहसागरादुद्दधार। तमेव भगवदुपदिष्टमर्थं कृष्णद्वैपायनः सप्तभिः श्लोकशतैरुपनिबबन्ध। तत्र च प्रायशः श्रीकृष्णमुखनिःसृतानेव श्लोकानलिखत्। कांश्चित्तत्संगतये स्वयं व्यरचयत्। यथोक्तं गीतामाहात्म्ये—'गीताः सुगीताः कर्तव्याः किमन्यैः शास्त्रविस्तरैः। याः स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृताः' इति। तत्र तावद्धर्मक्षेत्र इत्यादिना विषीदन्निदमब्रवीदित्यन्तेन ग्रन्थेन श्रीकृष्णार्जुनसंवादप्रस्तावाय कथा निरूप्यते ततः परमासमाप्तेस्तयोर्धर्मज्ञानार्थसंवादः। तत्र धर्मक्षेत्र इत्यनेन श्लोकेन धृतराष्ट्रेण हस्तिनापुरस्थितं स्वसारथिं समीपस्थं संजयं प्रति कुरुक्षेत्रवृत्तान्ते पृष्टे संजयो हस्तिनापुरस्थितोऽपि व्यासप्रसादाल्लब्धदिव्यचक्षुः कुरुक्षेत्रवृत्तान्तं साक्षात्पश्यन्निव धृतराष्ट्राय निवेदयामास—दृष्ट्वा तु पाण्डवानीकमित्यादिना ।

धृतराष्ट्र उवाच ।

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥

धर्मक्षेत्र इति । भो संजय, धर्मभूमौ कुरुक्षेत्रे मत्पुत्राः पाण्डुपुत्राश्च युयुत्सवो योद्धुमिच्छन्तः समवेता मिलिताः सन्तः किं कृतवन्तः ॥ १ ॥

संजय उवाच ।

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।**
**आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥**

दृष्ट्वेति । पाण्डवानामनीकं सैन्यं व्यूढं व्यूहरचनया व्यवस्थितं दृष्ट्वा द्रोणाचार्यसमीपं गत्वा राजा दुर्योधनो वक्ष्यमाणं वाक्यमुवाच ॥ २ ॥

तदेव वाक्यमाह—

**पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥**

पश्यैतामित्यादिनवभिः श्लोकैः । भो आचार्य, पाण्डवानां विततां चमूं सेनां सप्ताक्षौहिणीपरिमितां पश्य । द्रुपदपुत्रेण धृष्टद्युम्नेन व्यूढां व्यूहरचनयाऽधिष्ठिताम् ॥ ३ ॥

**अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।**
**युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥**

अत्र शूरा इति । अत्रास्यां चम्वां इषवो बाणा अस्यन्ते क्षिप्यन्ते एभिरितीष्वासा धनूंषि । महान्त इष्वासा येषां ते तथा । भीमार्जुनौ तावदत्रातिप्रसिद्धौ योद्धारौ । ताभ्यां समाः शूराः शौर्येण क्षात्रधर्मेणोपेताः सन्ति । तानेव नामभिर्निर्दिशति । युयुधानः सात्यकिः ॥ ४ ॥

किंच—

**धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।**
**पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५ ॥**

धृष्टकेतुरिति । चेकितानो नाम एको राजा । नरपुङ्गवो नरश्रेष्ठः शैब्यः ॥ ५ ॥

**युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।**
**सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥**

युधामन्युश्चेति । विक्रान्तो युधामन्युर्नामैकः । सौभद्रोऽभिमन्युः । द्रौपदेयाः द्रौपद्यां पञ्चभ्यो युधिष्ठिरादिभ्यो जाताः प्रतिविन्ध्यादयः पञ्च । महारथादीनां लक्षणम्—'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः ॥ अमितान्योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः । रथी त्वेकेन यो युद्ध्येत्तन्न्यूनोऽर्धरथो मतः' इति ॥ ६ ॥

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।**
**नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥**

**अस्माकमिति** । निबोध निबुद्ध्यस्व । नायका नेतारः । संज्ञार्थं सम्यग्ज्ञानार्थमित्यर्थः ॥ ७ ॥

तानेवाह—

**भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥**

**भवानिति** द्वाभ्याम् । भवान्द्रोणः । समितिं संग्रामं जयतीति तथा । सौमदत्तिः सोमदत्तस्य पुत्रो भूरिश्रवाः ॥ ८ ॥

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥**

**अन्ये चेति** । मदर्थे त्यक्तजीविताः । मत्प्रयोजनार्थं जीवितं त्यक्तुमध्यवसिता इत्यर्थः । नाना अनेकानि शस्त्राणि प्रहरणसाधनानि येषां ते । युद्धे विशारदाः निपुणा इत्यर्थः ॥ ९ ॥

ततः किमित्यत आह—

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥**

**अपर्याप्तमिति** । तत् तथाभूतैर्वीरैर्युक्तमपि भीष्मेणाभिरक्षितमप्यस्माकं बलं सैन्यमपर्याप्तं तैः सह योद्धुमसमर्थं भाति । इदं तु एतेषां पाण्डवानां बलं भीमेनाभिरक्षितं सत् पर्याप्तं समर्थं भाति । भीष्मस्योभयपक्षपातित्वात् अस्मद्बलं पाण्डवसैन्यं प्रत्यसमर्थम् । भीमस्यैकपक्षपातित्वात् एतद्बलं अस्मद्बलं प्रति समर्थं भाति ॥ १० ॥

तस्माद्भवद्भिरेवं वर्तितव्यमित्याह—

**अयनेषु च सर्वेषु यथाभागमवस्थिताः ।**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥**

**अयनेष्विति** । अयनेषु व्यूहप्रवेशमार्गेषु यथाभागं विभक्तां स्वां स्वां रणभूमिमपरित्यज्यावस्थिताः सन्तः सर्वे भीष्ममेवाभितो रक्षन्तु यथाऽन्यैर्युध्यमानः पृष्ठतः कैश्चिन्न हन्येत तथा रक्षन्तु । भीष्मबलेनैवास्माकं जीवितमिति भावः ॥ ११ ॥

तदेवं बहुमानयुक्तं राज्ञो दुर्योधनस्य वाक्यं श्रुत्वा भीष्मः किं कृतवांस्तदाह—

**तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥**

**तस्येति** । तस्य राज्ञः हर्षं संजनयन् कुर्वन् पितामहो भीष्म उच्चैर्महान्तं सिंहनादं कृत्वा शङ्खं दध्मौ वादितवान् ॥ १२ ॥

तदेवं सेनापतेर्भीष्मस्य युद्धोत्सवमालक्ष्य सर्वतो युद्धोत्सवः प्रवृत्त इत्याह—

**ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥**

**तत इति** । पणवाः आनकाः गोमुखाश्च वाद्यविशेषाः । सहसैव तत्क्षणमेव । अभ्यहन्यन्त वादिताः । स च शङ्खादिशब्दस्तुमुलो महानभवत् ॥ १३ ॥

ततः पाण्डवसैन्ये प्रवृत्तं युद्धोत्सवमाह—

**ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।**
**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥**

**तत इति पञ्चभिः** । ततः कौरवसैन्यवाद्यकोलाहलानन्तरं स्यन्दने रथे स्थितौ सन्तौ कृष्णार्जुनौ दिव्यौ शङ्खौ प्रकर्षेण दध्मतुर्वादयामासतुः ॥ १४ ॥

तदेव विभागेन दर्शयन्नाह—

**पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।**
**पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥**

**पाञ्चजन्यमिति** । पाञ्चजन्यादीनि श्रीकृष्णादिशङ्खानां नामानि । भीमं घोरं कर्म यस्य सः । वृकवदुदरं यस्य स वृकोदरो महाशङ्खं पौण्ड्रं दध्माविति ॥ १५ ॥

**अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।**
**नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥**

**अनन्तविजयमिति** । नकुलः सुघोषं नाम शङ्खं दध्मौ । सहदेवो मणिपुष्पकं नाम ॥ १६ ॥

**काश्यश्च परमेष्वासः शिखण्डी च महारथः ।**
**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥**

**काश्यश्चेति** । काश्यः काशीराजः । कथंभूतः । परमः श्रेष्ठ इष्वासो धनुर्यस्य सः ॥ १७ ॥

**द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।**
**सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक् ॥ १८ ॥**

**द्रुपद इति** । हे पृथिवीपते हे धृतराष्ट्र ॥ १८ ॥

स च शङ्खानां नादस्त्वदीयानां महाभयं जनयामासेत्याह—

**स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।**
**नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥**

**स घोष इति** । धार्तराष्ट्राणां त्वदीयानां हृदयानि विदारितवान् । किं कुर्वन् । नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् प्रतिध्वनिभिरापूरयन् ॥ १९ ॥

एतस्मिन्समये श्रीकृष्णमर्जुनो विज्ञापयामासेत्याह—

**अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।**
**प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥**

**अथेति** चतुर्भिः—व्यवस्थितान्युद्धोद्योगेन स्थितान् । कपिध्वजोऽर्जुनः ॥ २० ॥

**हृषीकेशं तदा वाक्यमिदमाह महीपते ।**

अर्जुन उवाच ।

**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥**

**हृषीकेशमिति** । तदेव वाक्यमाह—सेनयोरिति ॥ २१ ॥

**यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।**
**कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥**

**यावदेतानिति** । ननु त्वं योद्धा नतु युद्धप्रेक्षकस्तत्राह—कैरिति कैः सह मया योद्धव्यम् ॥ २२ ॥

**योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।**
**धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥**

**योत्स्यमानानिति** । धार्तराष्ट्रस्य दुर्योधनस्य प्रियं कर्तुमिच्छन्तो य इह समागताः तान्यावद्द्रक्ष्यामि तावदुभयोः सेनयोर्मध्ये मे रथं स्थापयेत्यन्वयः ॥ २३ ॥

ततः किं वृत्तमित्यपेक्षायां—

संजय उवाच ।

**एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥**

एवमिति । गुडाका निद्रा तस्या ईशेन जितनिद्रेणार्जुनेनैवमुक्तः सन् हे भारत धृतराष्ट्र, सेनयोर्मध्ये रथानामुत्तमं रथं हृषीकेशः स्थापितवान् ॥ २४ ॥

**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।**
**उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥**

भीष्मद्रोणेति । भीष्मद्रोणयोर्महीक्षितां राज्ञां च प्रमुखतः संमुखे रथं स्थापयित्वा हे पार्थ, एतान्कुरून्पश्येत्युवाच ॥ २५ ॥

ततः किं प्रवृत्तमित्यत आह—

**तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।**
**आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ।**
**श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ॥ २६ ॥**

तत्रापश्यदिति सार्धेन—तत्रेति । पितॄन् । पितृव्यादीनित्यर्थः । पुत्रान्पौत्रानिति । दुर्योधनादीनां ये पुत्राः पौत्राश्च तानित्यर्थः । सखीन्मित्राणि । सुहृदः कृतोपकारांश्चापश्यत् ॥ २६ ॥

ततः किं कृतवानित्यत आह—

**तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ।**
**कृपया परयाविष्टो विषीदन्निदमब्रवीत् ॥ २७ ॥**

तानिति । आविष्टो व्याप्तः युक्तः । विषीदन्विशेषेण सीदन्नवसादं ग्लानिं लभमानः ॥ २७ ॥

किमब्रवीदित्यपेक्षायामाह—दृष्ट्वेममित्यादियावदध्यायसमाप्ति—

अर्जुन उवाच ।

**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ।**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥ २८ ॥**

हे कृष्ण, योद्धुमिच्छन्तं पुरतः सम्यगवस्थितमिमं बन्धुजनं दृष्ट्वा मदीयानि गात्राणि करचरणादीनि सीदन्ति विशीर्यन्ते । किंच मुखं परि समन्ताच्छुष्यति निर्द्रवीभवति ॥ २८ ॥

**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।**
**गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ॥ २९ ॥**

वेपथुश्चेति । वेपथुः कम्पः । रोमहर्षो रोमाञ्चः । स्रंसते निपतति । परिदह्यते सर्वतः संतप्यते ॥ २९ ॥

अन्यच्च—

**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ।**
**निमित्तानि च पश्यामि विपरीतानि केशव ॥ ३० ॥**

न चेति । विपरीतानि निमित्तान्यनिष्टसूचकानि शकुनानि पश्यामि ॥ ३० ॥

किंच—

**न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ।**
**न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ॥ ३१ ॥**

न चेति । स्वजनं आहवे युद्धे हत्वा श्रेयः फलं न पश्यामि । विजयादिकं फलं किं न पश्यसीति चेत्तत्राह—न काङ्क्ष इति ॥ ३१ ॥

एतदेव प्रपञ्चयति—

**किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ।**
**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ॥ ३२ ॥**
**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ।**
**आचार्याः पितरः पुत्रास्तथैव च पितामहाः ॥ ३३ ॥**
**मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ।**

किं न इति सार्धाभ्याम् । यदर्थमस्माकं राज्यादिकमपेक्षितं त एते प्राणधनानि त्यक्त्वा त्यागमङ्गीकृत्य युद्धार्थमवस्थिताः । अतः किमस्माकं राज्यादिभिः कृत्यमित्यर्थः ॥ ३२ ॥ ३३ ॥

ननु यदि कृपया त्वमेतान्न हंसि तर्हि त्वामेते राज्यलोभेन हनिष्यन्त्येव अतस्त्वमेवैतान्हत्वा राज्यं भुङ्क्ष्व तत्राह—

**एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ॥ ३४ ॥**
**अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ।**
**निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ॥ ३५ ॥**

एतानिति सार्धेन । घ्नतोऽप्यस्मान्घातयतोऽप्येतांस्त्रैलोक्यराज्यस्यापि हेतोस्तत्प्राप्त्यर्थमप्यहं हन्तुं नेच्छामि । किं पुनर्महीमात्रप्राप्त्यर्थमित्यर्थः ॥ ३४ ॥ ३५ ॥

ननु च 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहर्ता च षडेते ह्याततायिनः' इति स्मरणात् । अग्निदत्वादिभिः षड्भिरपि हेतुभिरेते तावदाततायिनः । आततायिनां च वधो युक्त एव । 'आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन' इति वचनात्तत्राह सार्धेन—

**पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ।**
**तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ॥**
**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३६ ॥**

पापमिति । आततायिनमायान्तमित्यादिकमर्थशास्त्रं हि धर्मशास्त्राद्दुर्बलम् । यथोक्तं याज्ञवल्क्येन—'स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः । अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ।' तस्मादाततायिनामप्येतेषामाचार्यादीनां वधेऽस्माकं पापमेव भवेदन्याय्यत्वादधर्मत्वाच्चैतद्वधस्य । न चेह सुखं स्यादित्याह— **स्वजनं हीति** ॥ ३६ ॥

ननु तवैतेषामपि बन्धुवधदोषे समाने सति यथैवैते बन्धुवधदोषमङ्गीकृत्य युद्धे प्रवर्तन्ते तथैव भवानपि प्रवर्ततां किमनेन विषादेनेत्यत आह—

**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।**
**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३७ ॥**
**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।**
**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३८ ॥**

द्वाभ्याम्—**यद्यपीति** । राज्यलोभेनोपहतं भ्रष्टविवेकं चेतो येषां त एते दुर्योधनादयो यद्यपि दोषं न पश्यन्ति तथाप्यस्माभिर्दोषं प्रपश्यद्भिरस्मात्पापान्निवर्तितुं कथं न ज्ञेयम् । निवृत्तावेव बुद्धिः कर्तव्येत्यर्थः ॥ ३७ ॥ ३८ ॥

तमेव दोषं दर्शयति—

**कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।**
**धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ३९ ॥**

कुलक्षय इति । सनातनाः परम्पराप्राप्ताः । उतापि कृत्स्नमपि अवशिष्टं कुलमधर्मोऽभिभवति व्याप्नोति ॥ ३९ ॥

ततश्च—

**अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।**
**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४० ॥**

अधर्माभिभवादिति ॥ ४० ॥

एवं च सति—

**संकरो नरकायैव कुलघ्नानां कुलस्य च ।**
**पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४१ ॥**

संकर इति । एषां कुलघ्नानां पितरः पतन्ति । हि यस्माल्लुप्ता पिण्डोदकक्रिया येषां ते ॥ ४१ ॥

उक्तं दोषमुपसंहरति—

**दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।**
**उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४२ ॥**
**उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।**
**नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४३ ॥**

दोषैरिति द्वाभ्याम् । उत्साद्यन्ते लुप्यन्ते जातिधर्मा वर्णधर्माः कुलधर्माश्च । चकारादाश्रमधर्मादयोऽपि गृह्यन्ते ।

उत्सन्नेति । उत्सन्नाः कुलधर्मा येषां ते तथा तेषाम् । उत्सन्नकुलधर्माणामित्युत्सन्नजातिधर्मादीनामप्युपलक्षणम् । अनुशुश्रुम श्रुतवन्तो वयम् । 'प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः । अपश्चात्तापिनः कष्टान्निरयान्यान्ति दारुणान्' इत्यादिवचनेभ्यः ॥ ४२ ॥ ४३ ॥

बन्धुवधव्यवसायेन संतप्यमान आह—

**अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।**
**यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४४ ॥**

अहो इति । स्वजनं हन्तुमुद्यता इति । यत एतन्महत्पापं कर्तुमध्यवसायं कृतवन्तो वयम् । अहो बत कष्टमित्यर्थः ॥ ४४ ॥

एवं संतप्तः सन्मृत्युमेवाशासान आह—

**यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।**
**धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४५ ॥**

यदीति । अकृतप्रतीकारं तूष्णीमुपविष्टं मां यदि हनिष्यन्ति तर्हि तद्धननं मम क्षेमतरमत्यन्तं हितं भवेत् पापानिष्पत्तेः ॥ ४५ ॥

ततः किं वृत्तमित्यपेक्षायाम्—

संजय उवाच ।

**एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।**
**विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४६ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेऽर्जुनविषादयोगोनाम प्रथमोऽध्यायः ॥ १ ॥

एवमिति । संख्ये संग्रामे । रथोपस्थे रथस्योपरि । उपाविशदुपविवेश शोकेन संविग्नं प्रकम्पितं मानसं चित्तं यस्य सः ॥ ४६ ॥

इति श्रीसुबोधिन्यां टीकायां श्रीधरस्वामिविरचितायां प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः २

ततः किं वृत्तमित्यपेक्षायाम्— सांख्य योग ॥

संजय उवाच ।

**तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।**
**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥**

तं तथेति । अश्रुभिः पूर्णे आकुले ईक्षणे यस्य तम् । तथोक्तप्रकारेण विषीदन्तं तमर्जुनं प्रति मधुसूदन इदं वाक्यमुवाच ॥ १ ॥

तदेव वाक्यमाह—

श्रीभगवानुवाच ।

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।**
**अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥**

कुत इति । कुतो हेतोः । त्वा इति त्वाम् । विषमे संकटे इदं कश्मलं समुपस्थितमयं मोहः प्राप्तः । यत आर्यैरसेवितम् । अस्वर्ग्यमधर्म्यमयशस्करं च ॥ २ ॥

तस्मात्—

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥**

क्लैब्यमिति । हे पार्थ, क्लैब्यं कातर्यं मा स्म गमः न प्राप्नुहि ।

यतस्त्वय्येतन्नोपपद्यते योग्यं न भवति। क्षुद्रं तुच्छं हृदयदौर्बल्यं कातर्यं त्यक्त्वा युद्धायोत्तिष्ठ हे परन्तप शत्रुतापन ॥ ३ ॥

नाहं कातर्येण युद्धादुपरतोऽस्मि किंतु युद्धस्यान्याय्यत्वादिति—

अर्जुन उवाच।

**कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन।**
**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥**

**कथमिति**। भीष्मद्रोणौ पूजायामर्हौ योग्यौ तौ प्रति कथमहं योत्स्यामि तत्रापीषुभिः। यत्र वाचापि योत्स्यामीति वक्तुमनुचितं तत्र बाणैः कथं योत्स्यामीत्यर्थः। हे अरिसूदन शत्रुनिर्दलन ॥ ४ ॥

तर्हि तव देहयात्रापि न स्यादिति चेत्तत्राह—

**गुरूनहत्वा हि महानुभावाञ्छ्रेयो भोक्तुं भैक्ष्यमपीह लोके।**
**हत्वार्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥५॥**

**गुरूनिति**। गुरून्द्रोणादीनहत्वा परलोकविरुद्धो गुरुवधस्तमकृत्वा इह लोके भिक्षान्नमपि भोक्तुं श्रेयः उचितम्। विपक्षे तु न केवलं परत्र दुःखं, इहैव तु नरकदुःखमनुभवेयमित्याह—हत्वेति। गुरून्हत्वा इहैव तु रुधिरेण प्रदिग्धान्प्रकर्षेण लिप्तानर्थकामात्मकान्भोगानहं भुञ्जीय अश्नीयाम्। यद्वा अर्थकामानिति गुरूणां विशेषणम्। अर्थतृष्णाकुलत्वादेते तावद्युद्धान्न निवर्तेरन्। तस्मादेतद्वधः प्रसज्येतैवेत्यर्थः। तथाच युधिष्ठिरं प्रति भीष्मेणोक्तम्—'अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्। इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः' इति ॥ ५ ॥

किंच यद्यप्यधर्ममङ्गीकरिष्यामस्तथापि किमस्माकं जयः पराजयो वा भवेदिति न ज्ञायत इत्याह—

**न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः।**
**यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥६॥**

**न चेति**। एतद्द्वयोर्मध्ये नोऽस्माकं कतरत् किं नाम गरीयोऽधिकतरं भवतीति न विद्मः। तदेव द्वयं दर्शयति—यद्वा एतान्वयं जयेम जेष्यामः यदि वा नोऽस्मानेते जयेयुर्जेष्यन्तीति। किं चास्माकं जयोऽपि फलतः पराजय एवेत्याह—यानेव हत्वा जीवितुं नेच्छामस्त एवैते संमुखेऽवस्थिताः ॥ ६ ॥

कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्

कार्पण्येति । कार्पण्यदोषोपहतस्वभावः एतान्हत्वा कथं जीविष्याम इति कार्पण्यं, दोषश्च स्वकुलक्षयकृतः, ताभ्यामुपहतोऽभिभूतः स्वभावः शौर्यादिलक्षणो यस्य सोऽहं त्वां पृच्छामि । तथा धर्मे संमूढं चेतो यस्य सः । युद्धं त्यक्त्वा भिक्षाटनमपि क्षत्रियस्य धर्मो वाऽधर्मो वेति संदिग्धचित्तः सन्नित्यर्थः । अतो मे यन्निश्चितं श्रेयो युक्तं स्यात्तद्ब्रूहि । किंच तेऽहं शिष्यः शासनार्हः । अतस्त्वां प्रपन्नं शरणागतं मां शाधि शिक्षय ॥ ७ ॥

त्वमेव विचार्य यद्युक्तं तत्कुर्विति चेत्तत्राह—

नहि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥८॥

नहीति । इन्द्रियाणामुच्छोषणमतिशोषणकरं मदीयं शोकं यत्कर्मापनुद्यादपनयेत्तदहं न प्रपश्यामि । यद्यपि भूमौ निष्कण्टकं समृद्धं राज्यं प्राप्स्यामि तथा सुरेन्द्रत्वमपि यदि प्राप्स्यामि एवमभीष्टं तत्सर्वमवाप्यापि शोकापनोदनोपायं न प्रपश्यामीत्यन्वयः ॥ ८ ॥

एवमुक्त्वाऽर्जुनः किं कृतवानित्यपेक्षायाम्—

संजय उवाच ।

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतप ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥

एवमिति । स्पष्टार्थः ॥ ९ ॥

ततः किं वृत्तमित्यपेक्षायामाह—

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

तमुवाचेति । प्रहसन्निव प्रसन्नमुखः सन्नित्यर्थः ॥ १० ॥

देहात्मनोरविवेकादस्यैवं शोको भवतीति तद्विवेकप्रदर्शनार्थम्—

श्रीभगवानुवाच ।

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥

अशोच्यानिति । शोकस्याविषयभूतानेव बन्धूंस्त्वमन्वशोचोऽनुशोचितवानसि 'दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम्' इत्यादिना । तत्र 'कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्' इत्यादिना मया बोधितोऽपि पुनश्च प्रज्ञावतां पण्डितानां वादान् शब्दान् 'कथं भीष्ममहं संख्ये' इत्यादीन्केवलं भाषसे नतु पण्डितोऽसि । यतो [ विद्वांसः ] गतासूनगतप्राणान्बन्धूनगतासूंश्च जीवतोऽपि बन्धुहीना एते कथं जीविष्यन्तीति नानुशोचन्ति ॥ ११ ॥

अशोच्यत्वे हेतुमाह—

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥**

न त्वेवेति । यथाहं परमेश्वरो जातु कदाचिल्लीलाविग्रहस्याविर्भावे तिरोभावेऽपि नासमिति नैव, अपितु आसमेव अनादित्वात् । नच त्वं नासीः नाभूः, अपित्वासीरेव । इमे च जनाधिपाः नृपाः नासन्निति न, अपितु आसन्नेव मदंशत्वात्, तथाऽतःपरं इत उपर्यपि न भविष्यामो न स्थास्याम इति च नैव, अपितु स्थास्यामः । एवं जन्ममरणशून्यत्वादशोच्या इत्यर्थः ॥ १२ ॥

नन्वीश्वरस्य तव जन्मादिशून्यत्वं सत्यमेव जीवानां तु जन्ममरणे प्रसिद्धे तत्राह—

**देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥**

देहिन इति । देहिनो देहाभिमानिनो जीवस्य यथाऽस्मिन्स्थूलदेहे कौमाराद्यवस्था देहनिबन्धना एव नतु स्वतः पूर्वावस्थानाशेऽवस्थान्तरोत्पत्तावपि स एवाहमिति प्रत्यभिज्ञानात्तथैवैतदेहनाशे देहान्तरप्राप्तिरपि लिङ्गदेहनिबन्धना । नतु तावतात्मनो नाशः । जातमात्रस्य पूर्वसंस्कारेण स्तन्यपानादौ प्रवृत्तिदर्शनात् । अतो धीरः धीमांस्तत्र तयोर्देहनाशोत्पत्त्योर्न मुह्यति आत्मैव मृतो जातश्चेति न मन्यते ॥ १३ ॥

ननु गतासूनगतासूंश्चाहं न शोचामि किंतु तद्वियोगादिदुःखभाजं मामेवेति चेत्तत्राह—

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥**

**मात्रास्पर्शा इति** । मीयन्ते ज्ञायन्ते विषया आभिरिति मात्रा इन्द्रियवृत्तयः तासां स्पर्शा विषयैः संबन्धाः ते शीतोष्णादिप्रदा भवन्ति । ते त्वागमापायित्वादनित्या अस्थिराः अतस्तांस्तितिक्षस्व सहस्व । यथा जलातपादिसंपर्कास्तत्तत्कालकृताः स्वभावतः शीतोष्णादि प्रयच्छन्ति एवमिष्टसंयोगवियोगा अपि सुखदुःखादि प्रयच्छन्ति तेषां चास्थिरत्वात्सहनं तव धीरस्योचितं नतु तन्निमित्तहर्षविषादपारवश्यमित्यर्थः ॥ १४ ॥

तत्प्रतीकारप्रयत्नादपि तत्सहनमेवोचितं महाफलत्वादित्याह—

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥**

**यमिति** । एते मात्रास्पर्शाः यं पुरुषं न व्यथयन्ति नाभिभवन्ति । समे सुखदुःखे यस्य तम् । स तैरविक्षिप्यमाणो धर्मज्ञानद्वारा अमृतत्वाय मोक्षाय कल्पते योग्यो भवति ॥ १५ ॥

ननु तथापि शीतोष्णादिकमतिदुःसहं कथं सोढव्यम्, अत्यन्तं तत्सहने च कदाचिदात्मनाशस्यापि संभवादित्याशङ्क्य तत्त्वविचारतः सर्वं सोढुं शक्यमित्याशयेनाह—

**नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥**

**नेति** । असतः अनात्मधर्मत्वादविद्यमानस्य शीतोष्णादेरात्मनि भावः सत्ता न विद्यते । तथा सतः सत्स्वभावस्यात्मनोऽभावो विनाशो न विद्यते । एवमुभयोः सदसतोरन्तो निर्णयो दृष्टः । कैः तत्त्वदर्शिभिर्वस्तुयाथात्म्यविद्भिः । एवंभूतविवेकेन सहस्वेत्यर्थः ॥ १६ ॥

तत्र सत्स्वभावमविनाशिवस्तु सामान्येनोक्तं विशेषतो दर्शयति—

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।**
**विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥**

**अविनाशीति** । येन सर्वमिदमागमापायधर्मकं देहादिकं ततं तत्साक्षित्वेन व्याप्तम् । तत्तु आत्मस्वरूपमविनाशि विनाशशून्यं विद्धि जानीहि । तत्र हेतुमाह—विनाशमिति ॥ १७ ॥

आगमापायधर्ममसद्दर्शयति—

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥**

**अन्तवन्त इति** । अन्तो नाशो विद्यते येषां तेऽन्तवन्तः । नित्यस्य सर्वदैकरूपस्य शरीरिणः शरीरवतः । अतएव अनाशिनो विनाशरहितस्याप्रमेयस्यापरिच्छिन्नस्यात्मन इमे सुखदुःखादिधर्मका देहा उक्तास्तत्त्वदर्शिभिः । यस्मादेवमात्मनो न विनाशः न च सुखदुःखादिसंबन्धः तस्मान्मोहजं शोकं त्यक्त्वा युध्यस्व । स्वधर्मं मात्याक्षीदित्यर्थः ॥ १८ ॥

तदेवं भीष्मादिमृत्युनिमित्तः शोको निवारितः । यच्चात्मनो हन्तृत्वनिमित्तं दुःखमुक्तं 'एतान्न हन्तुमिच्छामि' इत्यादिना तदपि तद्वदेव निर्निमित्तमित्याह—

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥**

**य एनमिति** । एनमात्मानम् । आत्मनो हननक्रियायां कर्मत्वं कर्तृत्वमपि नास्तीत्यर्थः । तत्र हेतुर्नायमिति ॥ १९ ॥

न हन्यत इत्येतदेव षड्भावविकारशून्यत्वेन द्रढयति—

**न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥२०॥**

**नेति** । न जायत इति जन्मप्रतिषेधः । न म्रियते चेति विनाशप्रतिषेधः । वाशब्दौ चार्थे । न चायं भूत्वा उत्पद्य भविता भवति अस्तित्वं भजते । किंतु प्रागेव स्वतः सद्रूप इति जन्मान्तरास्तित्वलक्षणद्वितीयविकारप्रतिषेधः । तत्र हेतुः—यस्मादजः । यो हि जायते स जन्मान्तरमस्तित्वं भजते नतु यः स्वयमेवास्ति स भूयोऽप्यन्यदस्तित्वं भजत इत्यर्थः । नित्यः सर्वदैकरूप इति वृद्धिप्रतिषेधः । शाश्वतः शश्वद्भव इत्यपक्षयप्रतिषेधः । पुराण इति विपरिणामप्रतिषेधः । पुरापि नव एव नतु परिणामतो रूपान्तरं प्राप्य नवो भवतीत्यर्थः । यद्वा न भवितेत्यस्यानुषङ्गं कृत्वा भूयोऽधिकं यथा भवति तथा न भवतीति वृद्धिप्रतिषेधः । अजो नित्य इति चोभयवृद्ध्यभावे हेतुरित्यपौनरुक्त्यम् । तदेवं जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यतीत्येवं यास्कादिभिर्वेदवादिभिरुक्ताः षड्भावविकारा निरस्ताः । यदर्थमेते विकारा निरस्तास्तं प्रस्तुतं विनाशाभावमुपसंहरति—न हन्यते हन्यमाने शरीर इति ॥ २० ॥

अतएव हन्तृत्वाभावोऽपि पूर्वोक्तः प्रसिद्ध इत्याह—

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।**
**कथं स पुरुषः पार्थं कं घातयति हन्ति कम् ॥ २१ ॥**

**वेदेति ।** नित्यं वृद्धिशून्यम् अव्ययमपक्षयशून्यम् अजमविनाशिनं च यो वेद स पुरुषः कं हन्ति कथं वा हन्ति एवंभूतस्य वधे साधनाभावात् । तथा स्वयं प्रयोजको भूत्वाऽन्येन कं घातयति । न कंचिदपि कथंचिदपीत्यर्थः । अनेन मय्यपि प्रयोजकत्वाद्दोषदृष्टिं मा कार्षीरित्युक्तं भवति ॥ २१ ॥

नन्वात्मनोऽविनाशेऽपि तदीयशरीरनाशं पर्यालोच्य शोचामीति चेत्तत्राह—

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही २२**

**वासांसीति ।** कर्मनिबन्धनानां नूतनानां देहानामवश्यंभावित्वान्न जीर्णदेहनाशे शोकावकाश इत्यर्थः ॥ २२ ॥

कथं हन्तीत्यनेनोक्तं वधसाधनाभावं दर्शयन्नविनाशित्वमात्मनः स्फुटीकरोति—

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥**

**नैनमिति ।** आपो नैनं क्लेदयन्ति मृदूकरणेन शिथिलं न कुर्वन्ति मारुतोऽप्येनं न शोषयति ॥ २३ ॥

तत्र हेतूनाह—

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥**

**अच्छेद्य इति** सार्धेन । निरवयवत्वादच्छेद्योऽयमक्लेद्यश्च । अमूर्तत्वात् । अदाह्यो द्रवत्वाभावादशोष्य इति भावः । इतश्च छेदादियोग्यो न भवति । यतो नित्यः, अविनाशी सर्वगतः सर्वत्र गतः, स्थाणुः स्थिरस्वभावः रूपान्तरापत्तिशून्यः, अचलः पूर्वरूपापरित्यागी, सनातनोऽनादिः ॥ २४ ॥

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥

अव्यक्त इति । अव्यक्तश्चक्षुराद्यविषयः, अचिन्त्यो मनसोऽप्यविषयः, अविकार्यः कर्मेन्द्रियाणामप्यगोचर इत्यर्थः । उच्यत इति नित्यत्वादावभियुक्तोक्तिं प्रमाणयति । उपसंहरति—तस्मादिति ॥ २५ ॥

तदेवमात्मनो जन्मविनाशाभावान्न शोकः कार्य इत्युक्तम् । इदानीं देहेन सहात्मनो जन्म, तद्विनाशेन च विनाशमङ्गीकृत्यापि शोको न कार्य इत्याह—

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६ ॥

अथ चेति । अथ च यद्यप्येनमात्मानं नित्यं सर्वदा तत्तद्देहे जाते जातं मन्यसे, तथा तद्देहे मृते मृतं मन्यसे पुण्यपापयोस्तत्फलभूतयोश्च जन्ममरणयोरात्मगामित्वात्, तथापि त्वं शोचितुं नार्हसि ॥ २६ ॥

कुत इत्यत आह—

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

जातस्येति । हि यस्माज्जातस्य स्वारम्भककर्मक्षये मृत्युर्ध्रुवो निश्चितः । मृतस्य च तत्तद्देहकृतेन कर्मणा जन्मापि ध्रुवमेव । तस्मादेवमपरिहार्येऽर्थेऽवश्यंभाविनि जन्ममरणलक्षणेऽर्थे त्वं विद्वाञ्शोचितुं नार्हसि । योग्यो न भवसीत्यर्थः ॥ २७ ॥

किंच देहानां च स्वभावं पर्यालोच्य तदुपाधिके आत्मनो जन्ममरणे शोको न कार्य इत्याह—

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

अव्यक्तादीनीति । अव्यक्तं प्रधानं तदेवादिः उत्पत्तेः पूर्वरूपं येषां तान्यव्यक्तादीनि भूतानि शरीराणि कारणात्मना स्थितानामेवोत्पत्तेः । तथा

व्यक्तमभिव्यक्तं मध्यं जन्ममरणान्तरालस्थितिलक्षणं येषाम् । अव्यक्ते निधनं लयो येषां तानीमान्येवंभूतान्येव । तत्र तेषु का परिदेवना कः शोकनिमित्तो विलापः । प्रतिबुद्धस्य स्वप्नदृष्टवस्तुष्विव शोको न युज्यत इत्यर्थः ॥ २८ ॥

कुतस्तर्हि विद्वांसोऽपि लोके शोचन्ति, आत्माज्ञानादेवेत्याशयेनात्मनो दुर्विज्ञेयतामाह—

**आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ।**
**आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् २९**

आश्चर्यवदिति । कश्चिदेनमात्मानं शास्त्राचार्योपदेशाभ्यां पश्यन्नाश्चर्यवत्पश्यति । सर्वगतस्य नित्यज्ञानानन्दस्वभावस्यात्मनोऽलौकिकत्वादैन्द्रजालिकवदघटमानं पश्यन्निव विस्मयेन पश्यति असंभावनाभिभूतत्वात् । तथा आश्चर्यवदन्यो वदति च शृणोति चान्यः । कश्चित्पुनर्विपरीतभावनाभिभूतः श्रुत्वापि नैव वेद । चशब्दादुक्त्वापि दृष्ट्वापि न सम्यग्वेदेति द्रष्टव्यम् ॥ २९ ॥

तदेवं दुर्बोधमात्मतत्त्वं संक्षेपेणोपदिशन्नशोच्यत्वमुपसंहरति—

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।**
**तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥**

देहीति ॥ ३० ॥

यच्चोक्तमर्जुनेन 'वेपथुश्च शरीरे मे रोमहर्षश्च जायते' इति तदप्ययुक्तमित्याह—

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ ३१ ॥**

स्वधर्ममिति । आत्मनो नाशाभावादेवैतेषां हननेऽपि विकम्पितुं नार्हसि । स्वधर्ममप्यवेक्ष्य विकम्पितुं नार्हसीति संबन्धः । यच्चोक्तं 'न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे' इत्यादि तत्राह—धर्म्यादिति । धर्मादनपेतान्न्याय्याद्युद्धादन्यत् ॥ ३१ ॥

किंच महति श्रेयसि स्वयमेवोपगते सति कुतो विकम्पस इत्याह—

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥**

**यदृच्छयेति** । यदृच्छयाऽप्रार्थितमेवोपपन्नं प्राप्तमीदृशं युद्धं सुखिनः सभाग्या एव लभन्ते । यतो निरावरणं स्वर्गद्वारमेवैतत् । यद्वा य एवंविधं युद्धं लभन्ते त एव सुखिन इत्यर्थः । एतेन 'स्वजनं हि कथं हत्वा सुखिनः स्याम' इति यदुक्तं तन्निरस्तं भवति ॥ ३२ ॥

विपक्षे दोषमाह—

**अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥**

**अथ चेत्त्वमिति** ॥ ३३ ॥

किंच—

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।**
**संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥**

**अकीर्तिमिति** । अव्ययां शाश्वतीम् । संभावितस्य बहुमानितस्याकीर्तिर्मरणादतिरिच्यतेऽधिकतरा भवति ॥ ३४ ॥

किंच—

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥**

**भयादिति** । येषां बहुगुणत्वेन त्वं पूर्वं संमतोऽभूस्त एव भयेन संग्रामात्त्वां निवृत्तं मन्येरन्, ततश्च पूर्वं बहुमतो भूत्वा लाघवं यास्यसि ॥ ३५ ॥

किंच—

**अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥**

**अवाच्येति** । अवाच्यान्वादान्वचनानर्हाञ्शब्दांस्तवाहितास्त्वच्छत्रवो वदिष्यन्ति ॥ ३६ ॥

यच्चोक्तं 'न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः' इति तत्राह—

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥**

**हतो वेति ।** पक्षद्वयेऽपि तव लाभ एवेत्यर्थः ॥ ३७ ॥

यदप्युक्तं 'पापमेवाश्रयेदस्मानि'ति तत्राह—

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥**

**सुखदुःखे इति ।** सुखदुःखे समे कृत्वा, तथा तयोः कारणभूतौ यौ लाभालाभावपि, तयोरपि कारणभूतौ जयाजयावपि समौ कृत्वा । एतेषां समत्वे कारणं हर्षविषादराहित्यम्। युज्यस्व सन्नद्धो भव। सुखाद्यभिलाषं हित्वा स्वधर्मबुद्ध्या युद्ध्यमानः पापं न प्राप्स्यसीत्यर्थः ॥ ३८ ॥

उपदिष्टं ज्ञानयोगमुपसंहरंस्तत्साधनं कर्मयोगं प्रस्तौति—

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥**

**एषेति ।** सम्यक् ख्यायते प्रकाश्यते वस्तुतत्त्वमनयेति संख्या सम्यग्ज्ञानं तस्मिन्प्रकाशमानमात्मतत्त्वं सांख्यं तस्मिन्करणीया बुद्धिरेषा तवाभिहिता । एवमभिहितायामपि सांख्यबुद्धौ तव चेदात्मतत्त्वमपरोक्षं न भवति तर्ह्यन्तःकरणशुद्धिद्वाराऽऽत्मतत्त्वापरोक्षार्थं कर्मयोगे त्विमां बुद्धिं शृणु । यया बुद्ध्या युक्तः परमेश्वरार्पितकर्मयोगेन शुद्धान्तःकरणः सन् तत्प्रसादप्राप्तापरोक्षज्ञानेन कर्मात्मकं बन्धं प्रकर्षेण हास्यसि त्यक्ष्यसि ॥ ३९ ॥

ननु कृष्यादिवत्कर्मणां कदाचिद्विघ्नबाहुल्येन फले व्यभिचारान्मन्त्राद्यङ्गवैगुण्येन च प्रत्यवायसंभवात्कुतः कर्मयोगेन कर्मबन्धप्रहाणं तत्राह—

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥**

**नेहेति ।** इह निष्कामकर्मयोगेऽभिक्रमस्य प्रारम्भस्य नाशो निष्फलत्वं नास्ति, प्रत्यवायश्च न विद्यते। ईश्वरोद्देशेनैव विघ्नवैगुण्याद्यसंभवात्। किंच अस्य धर्मस्य स्वल्पमप्युपक्रममात्रमपि कृतं महतो भयात्संसारा-

त्रायते रक्षति, नतु काम्यकर्मवत्किंचिदङ्गवैगुण्यादिना नैष्फल्यमस्येत्यर्थः ॥ ४० ॥

कुत इत्यपेक्षायामुभयोर्वैषम्यमाह—

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥**

**व्यवसायेति** । इहेश्वराराधनलक्षणे कर्मयोगे व्यवसायात्मिका परमेश्वरभक्त्यैव ध्रुवं तरिष्यामीति निश्चयात्मिकैवैकनिष्ठैव बुद्धिर्भवति । अव्यवसायिनां तु बहिर्मुखानां कामिनां कामानामानन्त्यादनन्ताः, तत्रापि हि कर्मफलगुणफलादिप्रकारभेदाद्बहुशाखाश्च बुद्धयो भवन्ति । ईश्वराराधनार्थं हि नित्यनैमित्तिकं कर्म किंचिदङ्गवैगुण्येनापि न नश्यति । यथा शक्नुयात्तथा कुर्यादिति हि तद्विधीयते । नच वैगुण्यम् । ईश्वरोद्देशेनैव वैगुण्योपरमात् । नतु तथा काम्यं कर्म 'अग्निहोत्रं जुहुयात्स्वर्गकामः' 'दध्नेन्द्रियकामो जुहुयात्' अतो महद्वैषम्यमिति भावः ॥ ४१ ॥

ननु कामिनोऽपि कष्टान्कामान्विहाय व्यवसायात्मिकामेव बुद्धिं किं न कुर्वन्ति तत्राह—

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥**

**यामिति** । पुष्पितां पुष्पितविषलतावदापातरमणीयां प्रकृष्टां परमार्थफलपरामेव वदन्ति वाचं स्वर्गादिफलश्रुतिं ये तेषां तया वाचापहृतचेतसां व्यवसायात्मिका बुद्धिः समाधौ न विधीयत इति तृतीयेनान्वयः । किमिति तथा वदन्ति । यतोऽविपश्चितो मूढाः । तत्र हेतुः—वेदे ये वादा अर्थवादाः 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति', 'अपाम सोमममृता अभूम' इत्याद्यास्तेष्वेव रताः प्रीताः । अत एव अतः परमन्यदीश्वरतत्त्वं नास्तीति वदनशीलाः ॥ ४२ ॥

अत एव—

**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥**

**कामात्मान इति** । कामात्मानः कामाकुलचित्ताः । अतः स्वर्ग एव परः पुरुषार्थो येषां ते । जन्म च तत्र कर्माणि च तत्फलानि च प्रददातीति तथा ताम् । भोगैश्वर्ययोर्गतिं प्राप्तिं प्रति साधनभूता ये क्रियाविशेषास्ते बहुला यस्याः तां प्रवदन्तीत्यनुषङ्गः ॥ ४३ ॥

**भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥**

**भोगैश्वर्यप्रसक्तानामिति** । भोगैश्वर्ययोः प्रसक्तानामभिनिविष्टानाम् तया पुष्पितया वाचापहृतमाकृष्टं चेतो येषां तेषां समाधिः चित्तैकाग्र्यं परमेश्वरैकाग्र्याभिमुखत्वं तस्मिन्निश्चयात्मिका बुद्धिर्न विधीयते । कर्मकर्तरिप्रयोगः । नोत्पद्यत इत्यर्थः ॥ ४४ ॥

ननु च यदि स्वर्गादिकं परमं फलं न भवति तर्हि किमिति वेदैस्तत्साधनतया कर्माणि विधीयन्ते तत्राह—

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥**

**त्रैगुण्यविषया इति** । त्रिगुणात्मकाः सकामा येऽधिकारिणस्तद्विषयास्तेषां कर्मफलसंबन्धप्रतिपादका वेदाः । त्वं तु निस्त्रैगुण्यो निष्कामो भव । तत्रोपायमाह—निर्द्वन्द्वः सुखदुःखशीतोष्णादियुगुलानि द्वन्द्वानि तद्रहितो भव । तानि सहस्वेत्यर्थः । कथमित्यत्राह । नित्यसत्त्वस्थः सन् । धैर्यमवलम्ब्येत्यर्थः । तथा निर्योगक्षेमः । अप्राप्तस्वीकारो योगः, प्राप्तपरिपालनं क्षेमस्तद्रहितः । आत्मवानप्रमत्तः । नहि द्वन्द्वाकुलस्य योगक्षेमव्यापृतस्य च प्रमादिनस्त्रैगुण्यातिक्रमः संभवतीति ॥ ४५ ॥

ननु वेदोक्तनानाफलपरित्यागेन निष्कामतयेश्वराराधनविषया व्यवसायात्मिका बुद्धिस्तु कुबुद्धिरेवेत्याशङ्क्याह—

**यावानर्थ उदपाने सर्वतः संप्लुतोदके ।**
**तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥**

**यावानिति** । उदकं पीयतेऽस्मिन्नित्युदपानं वापीकूपतडागादि तस्मिन्स्वल्पोदके एकत्र कृत्स्नस्यार्थस्याभावात्तत्र तत्र परिभ्रमणेन विभागशो यावान्स्नानपानादिरर्थः प्रयोजनं भवति तावान्सर्वोऽप्यर्थः सर्वतः संप्लुतोदके महाह्रदे एकत्रैव यथा भवति, एवं यावान्सर्वेषु वेदेषु तत्तत्कर्मफलरूपोऽर्थस्तावान्सर्वोऽपि विजानतो व्यवसायात्मकबुद्धियुक्तस्य ब्राह्मणस्य ब्रह्मनिष्ठस्य भवत्येव ब्रह्मानन्दे क्षुद्रानन्दानामन्तर्भूतत्वात्, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । तस्मादियमेव बुद्धिः सुबुद्धिरित्यर्थः ॥ ४६ ॥

तर्हि सर्वकर्मफलानि परमेश्वराराधनादेव भविष्यन्तीत्यभिसंधाय प्रवर्तेत किं कर्मणेत्याशङ्क्य तद्वारयन्नाह—

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥**

**कर्मण्येवेति** । ते तव तत्त्वज्ञानार्थिनः कर्मण्येवाधिकारः । तत्फलेषु बन्धहेतुष्वधिकारः कामो मास्तु । ननु कर्मणि कृते तत्फलं स्यादेव भोजने कृते तृप्तिवदित्याशङ्क्याह—मा कर्मफलहेतुर्भूः । कर्मफलं प्रवृत्तिहेतुर्यस्य तथाभूतो मा भूः । कामितस्यैव स्वर्गादेर्नियोज्यविशेषणत्वेन फलत्वादकामितं फलं न स्यादिति भावः । अत एव फलं बन्धकं भविष्यतीति भयादकर्मणि कर्माकरणेऽपि तव सङ्गो निष्ठा मास्तु ॥ ४७ ॥

किं तर्हि—

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥**

**योगस्थ इति** । योगः परमेश्वरैकपरता तत्र स्थितः कर्माणि कुरु । तथापि सङ्गं कर्तृत्वाभिनिवेशं त्यक्त्वा केवलमीश्वराश्रयेणैव कुरु । तत्फलस्य ज्ञानस्यापि सिद्ध्यसिद्ध्योः समो भूत्वा केवलमीश्वरार्पणेनैव कुरु । यत एवंभूतं समत्वमेव योग उच्यते सद्भिः । चित्तसमाधानरूपत्वात् ॥ ४८ ॥

काम्यं तु कर्मातिनिकृष्टमित्याह—

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**

**दूरेणेति** । बुद्ध्या व्यवसायात्मिकया कृतः कर्मयोगो बुद्धियोगः, बुद्धिसाधनभूतो वा, तस्मात्सकाशादन्यत्काम्यं कर्म दूरेणावरमत्यन्तमपकृष्टम् । हि यस्मादेवं तस्माद्बुद्धौ ज्ञाने शरणमाश्रयं कर्मयोगमन्विच्छानुतिष्ठ । यद्वा बुद्धौ शरणं त्रातारमीश्वरमाश्रयेत्यर्थः । फलहेतवस्तु सकामा नराः कृपणा दीनाः । 'यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणः' इति श्रुतेः ॥ ४९ ॥

बुद्धियोगयुक्तस्तु श्रेष्ठ इत्याह—

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥**

**बुद्धीति** । सुकृतं स्वर्गादिप्रापकम्, दुष्कृतं निरयादिप्रापकम्,

ते उभे इहैव जन्मनि परमेश्वरप्रसादेन जहाति त्यजति । तस्माद्योगाय तदर्थाय कर्मयोगाय युज्यस्व घटस्व । यतः कर्मसु यत्कौशलं बन्धकानामपि तेषामीश्वराराधनेन मोक्षपरत्वसंपादनचातुर्यं स एव योगः ॥५०॥

कर्मणां मोक्षसाधनत्वप्रकारमाह—

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥**

कर्मेति । कर्मजं फलं त्यक्त्वा केवलमीश्वराराधनार्थं कर्मकुर्वाणा मनीषिणो ज्ञानिनो भूत्वा जन्मरूपेण बन्धेन विनिर्मुक्ताः सन्तोऽनामयं सर्वोपद्रवरहितं विष्णोः पदं मोक्षाख्यं गच्छन्ति ॥ ५१ ॥

कदा तत्पदमहं प्राप्स्यामीत्यपेक्षायामाह—

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥**

यदेति द्वाभ्याम् । मोहो देहादिष्वात्मबुद्धिः तदेव कलिलम् । 'कलिलं गहनं विदुः' इत्यभिधानकोशस्मृतेः । ततश्चायमर्थः—एवं परमेश्वराराधने क्रियमाणे यदा तत्प्रसादेन तव बुद्धिर्देहाभिमानलक्षणं मोहमयं गहनं दुर्गं विशेषेणातितरिष्यति तदा श्रोतव्यस्य श्रुतस्य चार्थस्य निर्वेदं वैराग्यं गन्तासि प्राप्स्यसि । तयोरनुपादेयत्वेन जिज्ञासां न करिष्यसीत्यर्थः ॥ ५२ ॥

ततश्च—

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥**

श्रुतीति । श्रुतिभिर्नानालौकिकवैदिकार्थश्रवणैर्विप्रतिपन्ना इतः पूर्वं विक्षिप्ता सती ते तव समाधौ बुद्धिर्यदा स्थास्यति समाधीयते चित्तमस्मिन्निति समाधिः परमेश्वरः तस्मिन्निश्चला विक्षेपव्याप्तिविषयान्तरैरनाकृष्टा अत एवाचला अभ्यासपटुत्वेन तत्रैव स्थिरा च सती तदा योगं योगफलं तत्त्वज्ञानमवाप्स्यसि ॥ ५३ ॥

पूर्वश्लोकोक्तस्यात्मतत्त्वज्ञस्य लक्षणं जिज्ञासुः—

अर्जुन उवाच ।

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥**

स्थितप्रज्ञस्येति । स्वाभाविके समाधौ स्थितस्यात एव स्थिता

निश्चला प्रज्ञा बुद्धिर्यस्य तस्य का भाषा । भाष्यतेऽनयेति भाषा । लक्षणमिति यावत् । केन लक्षणेन स्थितप्रज्ञ उच्यत इत्यर्थः । तथा स्थितधीः किं कथं भाषणं, आसनं, व्रजनं च कुर्यादित्यर्थः ॥ ५४ ॥

अत्र च यानि साधकस्य ज्ञानसाधनानि तान्येव स्वाभाविकानि सिद्धस्य लक्षणानि । अतः सिद्धस्य लक्षणानि कथयन्नेवान्तरङ्गाणि ज्ञानसाधनान्याह यावदध्यायसमाप्ति । तत्र प्रथमप्रश्नोत्तरमाह—

श्रीभगवानुवाच ।

**प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥**

प्रजहातीति द्वाभ्याम् । श्रीभगवानुवाच । मनसि स्थितान्सर्वान्कामान्यदा प्रकर्षेण जहाति । त्यागे हेतुः—आत्मन्येव स्वस्मिन्नेव परमानन्दरूपे आत्मना स्वयमेव तुष्ट इति । आत्मारामः सन् यदा क्षुद्रविषयाभिलाषांस्त्यजति तदा तेन लक्षणेन मुनिः स्थितप्रज्ञ इत्युच्यत इत्यर्थः ॥ ५५ ॥

किंच

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥**

दुःखेष्विति । दुःखेषु प्राप्तेष्वप्यनुद्विग्नमक्षुभितं मनो यस्य सः । सुखेषु विगता स्पृहा यस्य सः । तत्र हेतुः—वीतापगता रागभयक्रोधा यस्मात् । तत्र रागः प्रीतिः । स मुनिः स्थितधीः स्थितप्रज्ञ इत्युच्यते ॥ ५६ ॥

कथं भाषेतेत्यस्योत्तरमाह—

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥**

य इति । यः सर्वत्र पुत्रमित्रादिष्वप्यनभिस्नेहः स्नेहशून्यः । अतएव बाधितानुवृत्त्या तत्तच्छुभमनुकूलं प्राप्य नाभिनन्दति न प्रशंसति । अशुभं प्रतिकूलं प्राप्य न द्वेष्टि न निन्दति किंतु केवलमुदासीन एव भाषते तस्य प्रज्ञा प्रतिष्ठितेत्यर्थः ॥ ५७ ॥

किंच

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥**

यदेति । यदा चायं योगी इन्द्रियार्थेभ्यः शब्दादिभ्यः सकाशादिन्द्रियाणि संहरते प्रत्याहरति । अनायासेन संहारे दृष्टान्तः । अङ्गानि करचरणादीनि कूर्मो यथा स्वभावेनैवाकर्षति तद्वत् ॥ ५८ ॥

ननु नेन्द्रियाणां विषयेष्वप्रवृत्तिः स्थितप्रज्ञस्य लक्षणं भवितुमर्हति, जडानामातुराणामुपवासपराणां च विषयेष्वप्रवृत्तेरविशेषात्तत्राह—

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥**

विषया इति । इन्द्रियैर्विषयाणामाहरणं ग्रहणमाहारः । निराहारस्येन्द्रियैर्विषयग्रहणमकुर्वतो देहिनो देहाभिमानिनोऽज्ञस्य विषया विनिवर्तन्ते तदनुभवो निवर्तत इत्यर्थः । किंतु रसो रागोऽभिलाषस्तद्वर्जम् । अभिलाषस्तु न निवर्तत इत्यर्थः । रसोऽपि रागोऽपि परं परमात्मानं दृष्ट्वाऽस्य स्थितप्रज्ञस्य सतो निवर्तते । नश्यतीत्यर्थः । यद्वा निराहारस्योपवासपरस्य विषयाः प्रायशो विनिवर्तन्ते क्षुधासंतप्तस्य शब्दस्पर्शाद्यपेक्षाभावात् । परंतु रसवर्जम् । रसापेक्षा तु न निवर्तत इत्यर्थः । शेषं समानम् ॥ ५९ ॥

इन्द्रियसंयमं विना तु स्थितप्रज्ञता न संभवति, अतः साधकावस्थायां तत्र महान्प्रयत्नः कर्तव्य इत्याह—

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥**

यततो ह्यपीति द्वाभ्याम् । यततो मोक्षे प्रयतमानस्यापि विपश्चितो विवेकिनोऽपि मनः इन्द्रियाणि प्रसभं बलाद्धरन्ति । यतः प्रमाथीनि प्रमथनशीलानि प्रक्षोभकाणि ॥ ६० ॥

यस्मादेवं तस्मात्

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥**

तानीति । युक्तो योगी तानीन्द्रियाणि संयम्य मत्परः सन्नासीत । यस्य वशे वशवर्तीनि । एतेन कथमासीतेति प्रश्नस्य वशीकृतेन्द्रियः सन्नासीतेत्युत्तरमुक्तं भवति ॥ ६१ ॥

बाह्येन्द्रियसंयमाभावे दोषमुक्त्वा मनःसंयमाभावे दोषमाह—

**ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६२ ॥**

ध्यायत इति द्वाभ्याम्। गुणबुद्ध्या विषयान्ध्यायतः पुरुषस्य तेषु सङ्ग आसक्तिर्भवति। आसक्त्या च तेष्वधिकः कामो भवति। कामाच्च केनचित्प्रतिहतात्क्रोधो भवति ॥ ६२ ॥ किंच

**क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥**

क्रोधादिति। क्रोधात्संमोहः कार्याकार्यविवेकाभावः। ततः शास्त्राचार्योपदिष्टार्थस्मृतेर्विभ्रमो विचलनम्। ततो बुद्धेश्चेतनायाः विनाशो वृक्षादिष्विवाभिभवः। ततः प्रणश्यति मृततुल्यो भवति ॥ ६३ ॥

नन्विन्द्रियाणां विषयप्रवणस्वभावानां निरोद्धुमशक्यत्वादयं दोषो दुष्परिहर इति स्थितप्रज्ञत्वं कथं स्यादित्याशङ्क्याह

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥**

रागेति द्वाभ्याम्। रागद्वेषरहितैर्विगतदर्पैरिन्द्रियैर्विषयांश्चरन्नुपभुञ्जानोऽपि प्रसादं शान्तिं प्राप्नोति। रागद्वेषराहित्यमेवाह—आत्मनो मनसो वश्यैर्विधेयो वशवर्ती आत्मा मनो यस्येति। अनेनैव कथं व्रजेत भुञ्जीतेत्यस्य चतुर्थप्रश्नस्य स्वाधीनैरिन्द्रियैर्विषयानधिगच्छतीत्युत्तरमुक्तं भवति ॥ ६४ ॥

प्रसादे सति किं स्यादित्यत्राह—

**प्रसादे सर्वदुःखानां हानिरस्योपजायते।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥**

प्रसाद इति। प्रसादे सति सर्वदुःखनाशस्ततश्च प्रसन्नचेतसो बुद्धिः प्रतिष्ठिता भवतीत्यर्थः ॥ ६५ ॥

इन्द्रियनिग्रहस्य स्थितप्रज्ञतासाधनत्वं व्यतिरेकमुखेनोपपादयति—

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥**

नास्तीति। अयुक्तस्यावशीकृतेन्द्रियस्य नास्ति बुद्धिः शास्त्राचार्योपदेशाभ्यामात्मविषया बुद्धिः प्रज्ञैव नोपपद्यते, कुतस्तस्य प्रतिष्ठावार्ता। कुत इत्यत आह—न चायुक्तस्य भावना ध्यानम्। भावनया हि बुद्धेरात्मनि प्रतिष्ठा भवति। सा चायुक्तस्य यतो नास्ति। न चाभावयत

आत्मध्यानमकुर्वतः शान्तिरात्मनि चित्तोपरतिः । अशान्तस्य कुतः सुखम् । मोक्षानन्द इत्यर्थः ॥ ६६ ॥

नास्ति बुद्धिरयुक्तस्येत्यत्र हेतुमाह—

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥**

इन्द्रियाणामिति । इन्द्रियाणामवशीकृतानां स्वैरं विषयेषु चरतां मध्ये यदेवैकमिन्द्रियं मनोऽनुविधीयतेऽवशीकृतं सदिन्द्रियेण सह गच्छति, तदेवैकमिन्द्रियमस्य मनसः पुरुषस्य वा प्रज्ञां बुद्धिं हरति विषयविक्षिप्तां करोति, किमुत वक्तव्यं बहूनि प्रज्ञां हरन्तीति । यथा प्रमत्तस्य कर्णधारस्य नावं वायुः समुद्रे सर्वतः परिभ्रामयति तद्वत् ॥ ६७ ॥

इन्द्रियसंयमस्य स्थितप्रज्ञत्वे साधनत्वं लक्षणत्वं चोक्तमुपसंहरति—

**तस्मादस्य महाबाहो निगृहीतानि सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥६८॥**

तस्मादिति । प्रतिष्ठिता भवतीत्यर्थः । लक्षणत्वोपसंहारे तस्य प्रज्ञा प्रतिष्ठिता ज्ञातव्येत्यर्थः । महाबाहो इति संबोधयन् वैरिनिग्रहे समर्थस्य तवात्रापि सामर्थ्यं भवेदिति सूचयति ॥ ६८ ॥

ननु च कश्चिदपि प्रसुप्त इव दर्शनादिव्यापारशून्यः सर्वात्मना निगृहीतेन्द्रियो लोके न दृश्यते, अतोऽसंभावितमिदं लक्षणमित्याशङ्क्याह—

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥६९॥**

या निशेति । सर्वेषां भूतानां या निशा निशेव निशा आत्मनिष्ठा, आत्माज्ञानध्वान्तावृतमतीनां तस्यां दर्शनादिव्यवहाराभावात् । तस्यामात्मनिष्ठायां संयमी निगृहीतेन्द्रियो जागर्ति प्रबुध्यते । यस्यां तु विषयनिष्ठायां भूतानि जाग्रति प्रबुध्यन्ते सा आत्मतत्त्वं पश्यतो मुनेर्निशा । तस्यां दर्शनादिव्यापारस्तस्य नास्तीत्यर्थः । एतदुक्तं भवति—यथा दिवान्धानामुलूकादीनां रात्रावेव दर्शनं न तु दिवसे, एवं ब्रह्मज्ञस्योन्मीलिताक्षस्यापि ब्रह्मण्येव दृष्टिर्न तु विषयेषु । अतो नासंभावितमिदं लक्षणमिति ॥ ६९ ॥

ननु विषयेषु दृष्ट्यभावे कथमसौ तान्भुङ्क्ते इत्यपेक्षायामाह—

**आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ७०**

आपूर्यमाणमिति । नानानदीभिरापूर्यमाणमपि अचलप्रतिष्ठमनतिक्रान्तमर्यादमेव समुद्रं पुनरप्यन्या आपो यथा प्रविशन्ति, तथा कामा विषयाः यं मुनिमन्तर्दृष्टिं भोगैरविक्रियमाणमेव प्रारब्धकर्मभिराक्षिप्ताः सन्तः प्रविशन्ति स शान्तिं कैवल्यं प्राप्नोति नतु कामकामी भोगकामनाशीलः ॥ ७० ॥

यस्मादेवं तस्मात्—

**विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।**
**निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥**

विहायेति । प्राप्तान्कामान्विहाय त्यक्त्वोपेक्ष्य अप्राप्तेषु च निःस्पृहः यतो निरहंकारः अतएव तद्भोगसाधनेषु निर्ममः सन्नन्तर्दृष्टिर्भूत्वा यश्चरति, प्रारब्धवशेन भोगान्भुङ्क्ते, यत्र क्वापि गच्छति वा स शान्तिमाप्नोति ॥ ७१ ॥

उक्तां ज्ञाननिष्ठां स्तुवन्नुपसंहरति—

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ ७२ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

एषेति । ब्राह्मी स्थितिर्ब्रह्मज्ञाननिष्ठा एषा एवंविधा । एनां परमेश्वराराधनेन विशुद्धान्तकरणः पुमान् प्राप्य न विमुह्यति पुनः संसारमोहं न प्राप्नोति । यतः अन्तकाले मृत्युसमयेऽप्यस्यां क्षणमात्रमपि स्थित्वा ब्रह्मणि निर्वाणं लयमृच्छति प्राप्नोति, किं पुनर्वक्तव्यं बाल्यमारभ्य स्थित्वा प्राप्नोतीति ॥ ७२ ॥

शोकपङ्कनिमग्नं यः सांख्ययोगोपदेशतः ।
उज्जहारार्जुनं भक्तं स कृष्णः शरणं मम ॥ १ ॥

इति श्रीमद्भगवद्गीतायाः श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

एवं तावत् 'अशोच्यानन्वशोचस्त्वम्' इत्यादिना प्रथमं मोक्षसाधनत्वेन देहात्मविवेकबुद्धिरुक्ता । तदनन्तरं 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' इत्यादिना कर्म चोक्तम् । नच तयोर्गुणप्रधानभावः स्पष्टं दर्शितः । तत्र बुद्धियुक्तस्य स्थितप्रज्ञस्य निष्कामत्वनियतेन्द्रियत्वनिरहंकारत्वाद्यभिधानात् 'एषा ब्राह्मी स्थितिः पार्थ' इति सप्रशंसमुपसंहाराच्च बुद्धिकर्मणोर्मध्ये बुद्धेः श्रैष्ठ्यं भगवतोऽभिमतं मन्वानः—

अर्जुन उवाच ।

**ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥**

ज्यायसी चेदिति । कर्मणः सकाशान्मोक्षान्तरङ्गत्वेन बुद्धिर्ज्यायस्यधिकतरा श्रेष्ठा चेत्तव संमता तर्हि किमर्थं 'तस्माद्युद्धयस्वे'ति, 'तस्मादुत्तिष्ठे'ति च वारं वारं वदन्घोरे हिंसात्मके कर्मणि मां नियोजयसि प्रवर्तयसि ॥ १ ॥

ननु 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' इत्यादिना कर्मणोऽपि श्रेष्ठत्वमुक्तमेवेत्याशङ्क्याह

**व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥**

व्यामिश्रेणेति । क्वचित्कर्मप्रशंसा क्वचिज्ज्ञानप्रशंसेत्येवं व्यामिश्रं संदेहोत्पादकमिव यद्वाक्यं तेन मे बुद्धिं मतिमुभयत्र दोलायितां कुर्वन्मोहयसीव । परमकारुणिकस्य तव मोहकत्वं नास्त्येव, तथापि भ्रान्त्या ममैवं भातीतीवशब्देनोक्तम् । अत उभयोर्मध्ये यद्भद्रं तदेकं निश्चित्य वदेति । यद्वा इदमेव श्रेयःसाधनमिति निश्चित्य येनानुष्ठितेन श्रेयो मोक्षमहमाप्नुयां प्राप्स्यामि, तदेवैकं वदेत्यर्थः ॥ २ ॥

अत्रोत्तरम् श्रीभगवानुवाच ।

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥**

लोकेस्मिन्निति । अयमर्थः—यदि मया परस्परनिरपेक्षं मोक्षसाधनत्वेन कर्मज्ञानयोगरूपं निष्ठाद्वयमुक्तं स्यात्तर्हि द्वयोर्मध्ये यद्भद्रं तदेकं

वदेति त्वदीयप्रश्नः संगच्छेत, न तु मया तथोक्तं किं तु द्वाभ्यामेकैव ब्रह्मनिष्ठोक्ता । गुणप्रधानभूतयोस्तयोः स्वातन्त्र्यानुपपत्तेः । एकस्या एव तु प्रकारभेदमात्रमधिकारभेदेनोक्तमिति । अस्मिन् शुद्धाशुद्धान्तःकरणतया द्विविधे लोकेऽधिकारिजने द्वे विधे प्रकारौ यस्याः सा द्विविधा निष्ठा मोक्षपरता पुरा पूर्वाध्याये मया सर्वज्ञेन प्रोक्ता स्पष्टमेवोक्ता । प्रकारद्वयमेव निर्दिशति । सांख्यानां शुद्धान्तःकरणानां ज्ञानभूमिकामारूढानां ज्ञानपरिपाकार्थं ज्ञानयोगेन ध्यानादिना निष्ठा ब्रह्मपरतोक्ता 'तानि सर्वाणि संयम्य युक्त आसीत मत्परः' इत्यादिना । सांख्यभूमिकामारुरुक्षूणां त्वन्तःकरणशुद्धिद्वारा तदारोहार्थं तदुपायभूतकर्मयोगाधिकारिणां योगिनां कर्मयोगेन निष्ठोक्ता 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' इत्यादिना । अत एव चित्तशुद्ध्यशुद्धिरूपावस्थाभेदेनैव द्विविधापि निष्ठोक्ता 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' इति ॥ ३ ॥

अतः सम्यक् चित्तशुद्ध्यर्थं ज्ञानोत्पत्तिपर्यन्तं वर्णाश्रमोचितानि कर्माणि कर्तव्यानि । अन्यथा चित्तशुद्ध्यभावेन ज्ञानानुत्पत्तेरित्याह

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥**

**न कर्मणामिति ।** कर्मणामनारम्भादननुष्ठानान्नैष्कर्म्यं ज्ञानं नाश्नुते न प्राप्नोति । ननु च 'एवमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति संन्यासस्य मोक्षाङ्गत्वश्रुतेः संन्यासादेव मोक्षो भविष्यतीति किं कर्मभिरित्याशङ्क्योक्तम्—न चेति । न च चित्तशुद्धिं विना कृतात्संन्यसनादेव ज्ञानशून्यात्सिद्धिं मोक्षं समधिगच्छति प्राप्नोति ॥ ४ ॥

कर्मणां च संन्यासस्तेष्वनासक्तिमात्रं न तु स्वरूपेणाशक्यत्वादित्याह

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥**

**न हीति ।** जातु कस्यांचिदवस्थायां क्षणमात्रमपि कश्चिदपि ज्ञानी वाऽज्ञो वाऽकर्मकृत्कर्माण्यकुर्वाणो न तिष्ठति । तत्र हेतुः प्रकृतिजैः स्वभावप्रभवै रागद्वेषादिगुणैः सर्वोऽपि जनः कर्मणि प्रवर्तते । अवशोऽस्वतन्त्रः सन् ॥ ५ ॥

अतोऽज्ञं कर्मत्यागिनं निन्दति—

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥**

**कर्मेन्द्रियाणीति** । वाक्पाण्यादीनि कर्मेन्द्रियाण्यपि संयम्य निगृह्य यो मनसा भगवद्ध्यानच्छलेनेन्द्रियार्थान् विषयान् स्मरन्नास्ते अविशुद्धतया मनस आत्मनि स्थैर्याभावात् स मिथ्याचारः कपटाचारो दाम्भिक उच्यत इत्यर्थः ॥ ६ ॥

एतद्विपरीतः कर्मकर्ता श्रेष्ठ इत्याह—

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**

**यस्त्विति** । यस्तु ज्ञानेन्द्रियाणि मनसा नियम्य ईश्वरप्रवणानि कृत्वा कर्मेन्द्रियैः कर्मरूपं योगं उपायमारभतेऽनुतिष्ठति असक्तः फलाभिलाषरहितः सन् स विशिष्यते विशिष्टो भवति । चित्तशुद्ध्या ज्ञानवान्भवतीत्यर्थः ॥ ७ ॥

यस्मादेवं तस्मात्—

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥**

**नियतमिति** । नियतं नित्यं संध्योपासनादिकर्म कुरु । हि यस्मादकर्मणः कर्माकरणात्सकाशात्कर्म ज्यायोऽधिकतरम् । अन्यथा कर्मणः सर्वकर्मशून्यस्य तव शरीरनिर्वाहोऽपि न प्रसिद्ध्येन्न भवेत् ॥ ८ ॥

सांख्यास्तु सर्वमपि कर्म बन्धकत्वान्न कार्यमित्याहुस्तन्निराकुर्वन्नाह—

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥**

**यज्ञार्थादिति** । यज्ञोऽत्र विष्णुः । 'यज्ञो वै विष्णुः' इति श्रुतेः । तदाराधनार्थात्कर्मणोऽन्यत्र तदेकं विनाऽयं लोकः कर्मबन्धनः कर्मभिर्बध्यते न त्वीश्वराराधनार्थेन कर्मणा । अतस्तदर्थं विष्णुप्रीत्यर्थं मुक्तसङ्गो निष्कामः सन्कर्म सम्यगाचर ॥ ९ ॥

प्रजापतिवचनादपि कर्मकर्तैव श्रेष्ठ इत्याह—

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥**

सहयज्ञा इति चतुर्भिः । यज्ञेन सह वर्तन्त इति सहयज्ञाः यज्ञाधिकृता ब्राह्मणाद्याः प्रजाः पुरा सर्गादौ सृष्ट्वा ब्रह्मेदमुवाच—अनेन यज्ञेन प्रसविष्यध्वं प्रसूयध्वम् । प्रसवो हि वृद्धिः । उत्तरोत्तरामभिवृद्धिं लभध्वमित्यर्थः । तत्र हेतुः—एष यज्ञो वो युष्माकमिष्टकामधुगिष्टान्कामान्दोग्धीति तथा । अभीष्टभोगप्रदोऽस्त्वित्यर्थः । अत्र च यज्ञग्रहणमावश्यककर्मोपलक्षणार्थम् । काम्यकर्मप्रशंसा तु प्रकरणेऽसंगतापि सामान्यतोऽकर्मणः कर्म श्रेष्ठमित्येतदर्थेत्यदोषः ॥ १० ॥

कथमिष्टकामदोग्धा यज्ञो भवेदित्यत्राह—

**देवान्भावयतानेन ते देवा भावयन्तु वः ।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥**

देवानिति । अनेन यज्ञेन यूयं देवान्भावयत हविर्भागैः संवर्धयत ते च देवा वो युष्मान्संवर्धयन्तु वृष्ट्यादिनाऽन्नोत्पत्तिद्वारेण । एवमन्योन्यं संवर्धयन्तो देवाश्च यूयं च परस्परं श्रेयोऽभीष्टमर्थं प्राप्स्यथ ॥ ११ ॥

एतदेव स्पष्टीकुर्वन्कर्माकरणे दोषमाह—

**इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥**

इष्टानिति । यज्ञैर्भाविताः सन्तो देवा वृष्ट्यादिद्वारेण वः युष्मभ्यं भोगान्दास्यन्ति हि । अतो देवैर्दत्तानन्नादीनेभ्यो देवेभ्यः पञ्चयज्ञादिभिरदत्त्वा यो भुङ्क्ते स तु स्तेनः चोर एव ज्ञेयः ॥ १२ ॥

अतश्च यजन्त एव श्रेष्ठा नेतर इत्याह—

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥**

यज्ञशिष्टाशिन इति । वैश्वदेवादियज्ञावशिष्टं येऽश्नन्ति ते पञ्चसूनादिकृतैः सर्वैः किल्बिषैर्मुच्यन्ते । पञ्चसूनाश्च स्मृतावुक्ताः—'कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्चसूना गृहस्थस्य ताभिः स्वर्गं न विन्दति' इति । ये त्वात्मनो भोजनार्थमेवान्नं पचन्ति न तु वैश्वदेवाद्यर्थं ते पापा दुराचारा अघमेव भुञ्जते ॥ १३ ॥

जगच्चक्रप्रवृत्तिहेतुत्वादपि कर्म कर्तव्यमित्याह—

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

अन्नादिति त्रिभिः । अन्नाच्छुक्रशोणितरूपेण परिणताद्भूतान्युत्पद्यन्ते । अन्नस्य च संभवः पर्जन्याद्वृष्टेः । स च पर्जन्यो यज्ञाद्भवति । स च यज्ञः कर्मसमुद्भवः । कर्मणा यजमानादिव्यापारेण सम्यङ् निष्पद्यत इत्यर्थः । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति स्मृतेः ॥ १४ ॥

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

कर्म ब्रह्मोद्भवमिति । तच्च यजमानादिव्यापाररूपं कर्म ब्रह्मोद्भवं विद्धि ब्रह्म वेदस्तस्मात्प्रवृत्तं जानीहि । तच्च ब्रह्म वेदाख्यमक्षरात्परब्रह्मणः समुद्भूतं विद्धि । 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदः' इति श्रुतेः । यत एवमक्षरादेव यज्ञप्रवृत्तेरत्यन्तं तस्याभिप्रेतो यज्ञः तस्मात्सर्वगतमप्यक्षरं ब्रह्म नित्यं सर्वदा यज्ञे प्रतिष्ठितम्, यज्ञेनोपायभूतेन प्राप्यत इति यज्ञे प्रतिष्ठितमुच्यते । 'उद्यमस्था सदा लक्ष्मी'-रितिवत् । यद्वा यस्माज्जगच्चक्रमूलं कर्म तस्मात्सर्वगतं मन्त्रार्थवादैः सर्वेषु सिद्धार्थप्रतिपादकेषु भूतान्वाख्यानादिषु गतं स्थितमपि वेदाख्यं ब्रह्म सर्वदा यज्ञे तात्पर्यरूपेण प्रतिष्ठितम् । अतो यज्ञादि कर्म कर्तव्यमित्यर्थः ॥ १५ ॥

यस्मादेवं परमेश्वरेणैव भूतानां पुरुषार्थसिद्धये कर्मादिचक्रं प्रवर्तितं तस्मात्तदकुर्वतो वृथैव जीवितमित्याह

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥**

एवमिति । परमेश्वरवाक्यभूताद्वेदाख्याद्ब्रह्मणः । पुरुषाणां कर्मणि प्रवृत्तिः, ततः कर्मनिष्पत्तिः, ततः पर्जन्यः, ततोऽन्नम्, ततो भूतानि, भूतानां च पुनस्तथैव कर्मणि प्रवृत्तिरित्येवं प्रवर्तितं चक्रं यो नानुवर्तयति नानुतिष्ठति सोऽघायुः अघं पापरूपमायुर्यस्य सः, यत इन्द्रियैर्विषयेष्वेवाऽऽरमति न तु ईश्वराराधनार्थे कर्मणि अतो मोघं व्यर्थं स जीवति ॥ १६ ॥

तदेवं 'न कर्मणामनारम्भान्नैष्कर्म्यं' इत्यादिनाऽज्ञस्यान्तःकरणशुद्ध्यर्थं कर्मयोगमुक्त्वा ज्ञानिनः कर्मानुपयोगमाह—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥

यस्त्विति द्वाभ्याम् । आत्मन्येव रतिः प्रीतिर्यस्य । ततश्चात्मन्येव तृप्तः स्वानन्दानुभवेन निर्वृतः । अतएवात्मन्येव संतुष्टो भोगापेक्षारहितो यस्तस्य कर्तव्यं नास्ति ॥ १७ ॥

तत्र हेतुमाह

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥

नैव तस्येति । कृतेन कर्मणा तस्यार्थः पुण्यं नैवास्ति । न चाकृतेन कश्चन कोऽपि प्रत्यवायोऽस्ति । निरहंकारत्वेन विधिनिषेधातीतत्वात्, तथापि 'तस्मात्तदेषां देवानां न प्रियं यदेतन्मनुष्या विदुः' इति श्रुतेर्मोक्षे देवकृतविघ्नसंभवात्तत्परिहारार्थं कर्मभिर्देवाः सेव्या इत्याशङ्क्योक्तं सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कश्चिदप्यर्थव्यपाश्रयः आश्रय एव व्यपाश्रयः । अर्थे मोक्ष आश्रयणीयोऽस्य नास्तीत्यर्थः । विघ्नाभावस्य श्रुत्यैवोक्तत्वात् । तथा च श्रुतिः—'तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवति' इति । हनेत्यव्ययद्वयमप्यर्थे । देवा अपि तस्यात्मतत्त्वज्ञस्याभूत्यै ब्रह्मताप्रतिबन्धनाय नेशते न शक्नुवन्तीति श्रुतेरर्थः । देवकृतास्तु विघ्नाः सम्यग्ज्ञानोत्पत्तेः प्रागेव 'यदेतद्ब्रह्म मनुष्या विदुस्तदेषां देवानां न प्रियम्' इति श्रुत्या ब्रह्मज्ञानस्यैवाप्रियत्वोक्त्या तत्रैव विघ्नकर्तृत्वस्य सूचितत्वात् ॥ १८ ॥

यस्मादेवंभूतस्य ज्ञानिन एव कर्मानुपयोगो नान्यस्य तस्मात्त्वं कर्म कुर्विल्याह

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥

तस्मादिति । असक्तः फलसङ्गरहितः सन्कार्यमवश्यकर्तव्यतया विहितं नित्यनैमित्तिकं कर्म सम्यगाचर । हि यस्मादसक्तः कर्माचरन्पुरुषः परं मोक्षं चित्तशुद्धिज्ञानद्वारा प्राप्नोति ॥ १९ ॥

अत्र सदाचारं प्रमाणयति

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ २० ॥

कर्मणैवेति । कर्मणैव शुद्धसत्त्वाः सन्तः संसिद्धिं सम्यग्ज्ञानं प्राप्ता इत्यर्थः । यद्यपि त्वं सम्यग्ज्ञानिनमेवात्मानं मन्यसे तथापि कर्माचरणं भद्रमेवेत्याह—लोकसंग्रहमिति । लोकस्य संग्रहः स्वधर्मे प्रवर्तनं । मया कर्मणि कृते जनः सर्वोऽपि करिष्यति, अन्यथा ज्ञानिदृष्टान्तेनाज्ञः कर्म त्यजन्पतेदित्येवं लोकरक्षणमपि तावत्प्रयोजनं पश्यन्कर्म कर्तुमेवार्हसि न तु त्यक्तुमित्यर्थः ॥ २० ॥

कर्मकरणे लोकसंग्रहो यथा स्यात्तथाह—

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनु वर्तते ॥ २१ ॥**

यदिति । इतरः प्राकृतो जनोऽपि तत्तदेवाचरति । स श्रेष्ठो जनः कर्मशास्त्रं निवृत्तिशास्त्रं वा यत्प्रमाणं मन्यते तदेव लोकोऽप्यनुसरति ॥ २१ ॥

अत्र चाहमेव दृष्टान्त इत्याह—

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥**

न मे पार्थेति त्रिभिः । हे पार्थ, मे कर्तव्यं नास्ति । यतस्त्रिष्वपि लोकेष्वनवाप्तमप्राप्तं सदवाप्तव्यं प्राप्यं नास्ति, तथापि कर्मण्यहं वर्त एव । कर्म करोम्येवेत्यर्थः ॥ २२ ॥

अकरणे लोकस्य नाशं दर्शयति—

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥**

यदीति । जातु कदाचिदतन्द्रितोऽनलसः सन्यदि कर्मणि न वर्तेयं कर्म नानुतिष्ठेयं तर्हि ममैव वर्त्म मार्गं मनुष्या अनुवर्तन्ते अनुवर्तेरन्नित्यर्थः ॥ २३ ॥

ततः किमत आह—

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।**
**संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥**

उत्सीदेयुरिति । उत्सीदेयुः कर्मलोपेन नश्येयुः । ततश्च यो वर्णसंकरो भवेत्तस्याप्यहमेव कर्ता स्यां भवेयम् । एवमहमेव प्रजा उपहन्यां मलिनीकुर्याम् ॥ २४ ॥

तस्मादात्मविदापि लोकसंग्रहार्थं तत्कृपया कर्म कार्यमित्युपसंहरति—

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।**
**कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥**

सक्ता इति । कर्मणि सक्ता अभिनिविष्टाः सन्तोऽज्ञाः यथा कर्म कुर्वन्ति असक्तः सन् विद्वानपि तथैव कुर्यात् लोकसंग्रहं कर्तुमिच्छुः ॥२५॥

ननु कृपया तत्त्वज्ञानमेवोपदेष्टुं युक्तं, नेत्याह—

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥**

नेति । अज्ञानामतएव कर्मसङ्गिनां कर्मासक्तानामकर्तात्मोपदेशेन बुद्धेर्भेदमन्यथात्वं न जनयेत्कर्मणः सकाशाद्बुद्धिचालनं न कुर्यात्, अपि तु जोषयेत्सेवयेत् । 'जुषी प्रीतिसेवनयोः' । अज्ञान्कर्माणि कारयेदित्यर्थः । कथम्, युक्तोऽवहितो भूत्वा स्वयमाचरन्सन् । बुद्धिचालने कृते सति कर्मसु श्रद्धानिवृत्तेर्ज्ञानस्य चानुत्पत्तेस्तेषामुभयभ्रंशः स्यादिति भावः ॥२६॥

ननु विदुषापि चेत्कर्म कर्तव्यं तर्हि विद्वदविदुषोः को विशेष इत्याशङ्क्योभयोर्विशेषं दर्शयति—

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।**
**अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥**

प्रकृतेरिति द्वाभ्याम् । प्रकृतेर्गुणैः प्रकृतिकार्यैरिन्द्रियैः सर्वप्रकारेण क्रियमाणानि यानि कर्माणि तान्यहमेव कर्ता करोमीति मन्यते । तत्र हेतुः—अहंकारेणेन्द्रियादिष्वात्माध्यासेन विमूढ आत्मा बुद्धिर्यस्य सः ॥ २७ ॥

विद्वांस्तु तथा न मन्यत इत्याह—

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥**

तत्त्वविच्चिति । नाहं गुणात्मक इति गुणेभ्य आत्मनो विभागः, न मे कर्माणीति कर्मभ्योऽप्यात्मनो विभागस्तयोर्गुणकर्मविभागयोर्यस्तत्त्वं वेत्ति स तु न सज्जते कर्तृत्वाभिनिवेशं न करोति । तत्र हेतुः—गुणा इन्द्रियाणि गुणेषु विषयेषु वर्तन्ते नाहमिति मत्वा ॥ २८ ॥

न बुद्धिभेदं जनयेदित्युक्तमुपसंहरति—

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥ २९ ॥**

प्रकृतेरिति । ये प्रकृतेर्गुणैः सत्त्वादिभिः संमूढाः सन्तो गुणेष्विन्द्रियेषु तत्कर्मसु च सज्जन्ते वयं कुर्म इति, तानकृत्स्नविदो मन्दमतीन्कृत्स्नवित्सर्वज्ञो न विचालयेत् ॥ २९ ॥

तदेवं तत्त्वविदापि कर्म कर्तव्यं, त्वं तु नाद्यापि तत्त्ववित्, अतः कर्मैव कुर्वित्याह—

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युद्ध्यस्व विगतज्वरः ॥ ३० ॥**

मयीति । सर्वाणि कर्माणि मयि संन्यस्य समर्प्याध्यात्मचेतसान्तर्याम्यधीनोऽहं करोमीति दृष्ट्या निराशीर्निष्कामोऽतएव मत्फलसाधनं मदर्थमिदं कर्मेत्येवं ममताशून्यश्च भूत्वा विगतज्वरस्त्यक्तशोकश्च भूत्वा युद्ध्यस्व ॥ ३० ॥

एवं कर्मानुष्ठाने गुणमाह—

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥**

ये मे मतमिति । मद्वाक्ये श्रद्धावन्तः अनसूयन्तः दुःखात्मके कर्मणि प्रवर्तयतीति दोषदृष्टिमकुर्वन्तश्च ये मे मदीयमिदं मतमनुतिष्ठन्ति तेऽपि शनैः कर्मकुर्वाणाः सम्यग्ज्ञानिवत्कर्मभिर्मुच्यन्ते ॥ ३१ ॥

विपक्षे दोषमाह—

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।**
**सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥**

ये त्विति । ये तु मे मतमीश्वरार्थं कर्म कर्तव्यमित्यनुशासनमभ्यसूयन्तो द्विषन्तो नानुतिष्ठन्तीति तानचेतसो विवेकशून्यानतएव सर्वस्मिन्कर्मणि ब्रह्मविषये च यज्ज्ञानं तत्र विमूढान्नष्टान्विद्धि ॥ ३२ ॥

ननु तर्हि महाफलत्वादिन्द्रियाणि निगृह्य निष्कामाः सन्तः सर्वेऽपि स्वधर्ममेव किं नानुतिष्ठन्ति, तत्राह—

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥**

सदृशमिति । प्रकृतिः प्राचीनकर्मसंस्काराधीनस्वभावः स्वस्याः स्वकीयायाः प्रकृतेः स्वभावस्य सदृशमनुरूपमेव गुणदोषज्ञानवानपि चेष्टते, किं पुनर्वक्तव्यमज्ञश्चेष्टत इति । तस्माद्भूतानि सर्वेऽपि प्राणि-

नः प्रकृतिं यान्त्यनुवर्तन्ते । एवं सति इन्द्रियनिग्रहः किं करिष्यति प्रकृतेर्बलिष्ठत्वादित्यर्थः ॥ ३३ ॥

नन्वेवं प्रकृत्यधीनैव चेत्पुरुषस्य प्रवृत्तिः तर्हि विधिनिषेधवैयर्थ्यं प्राप्तमित्याशङ्क्याह—

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥**

**इन्द्रियस्येति** । इन्द्रियस्येन्द्रियस्येति वीप्सया प्रत्येकं सर्वेषामिन्द्रियाणामित्युक्तम् । अर्थे स्वस्वविषयेऽनुकूले रागः प्रतिकूले द्वेषश्चेत्येवं रागद्वेषौ व्यवस्थिताववश्यं भाविनौ । ततश्च तदनुरूपा प्रवृत्तिरिति भूतानां प्रकृतिः । तथापि तयोर्वशवर्ती न भवेदिति शास्त्रेण नियम्यते । हि यस्मादस्य मुमुक्षोस्तौ परिपन्थिनौ प्रतिपक्षौ । अयं भावः— विषयस्मरणादिना रागद्वेषावुत्पाद्यानवहितं पुरुषमनर्थेऽपि गम्भीरस्रोतः पातइव प्रकृतिर्बलात्प्रवर्तयति । शास्त्रं तु ततः प्रागेव विषयेषु रागद्वेषप्रतिबन्धके परमेश्वरभजनादौ प्रवर्तयति गम्भीरस्रोत.पातात्पूर्वमेव नावमाश्रित इव नानर्थं प्राप्नोति ॥ ३४ ॥

तदेवं स्वाभाविकीं पश्वादिसदृशीं प्रकृतिं त्यक्त्वा स्वधर्मे प्रवर्तितव्यमित्युक्तं, तर्हि स्वधर्मस्य युद्धादेर्दुःखरूपस्य यथावत्कर्तुमशक्यत्वात्परधर्मस्य चाहिंसादेः सुकरत्वाद्धर्मत्वाविशेषाच्च तत्र प्रवर्तितुमिच्छन्तं प्रत्याह—

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

**श्रेयानिति** । किंचिदङ्गहीनोऽपि स्वधर्मः श्रेयान्प्रशस्यतरः । स्वनुष्ठितात्सर्वाङ्गसंपूर्त्या कृतादपि परधर्मात्सकाशात् । तत्र हेतुः—स्वधर्मे युद्धादौ प्रवर्तमानस्य निधनं मरणमपि श्रेष्ठम् । स्वर्गादिप्रापकत्वात् । परधर्मस्तु स्वस्य भयावहः । निषिद्धत्वेन नरकप्रापकत्वात् ॥ ३५ ॥

तयोर्न वशमागच्छेदित्युक्तं तदेतदशक्यं मन्वानः—

अर्जुन उवाच ।

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥**

**अथ केनेति** । वृष्णिवंशेऽवतीर्णो वार्ष्णेयः । हे वार्ष्णेय, अनर्थरूपं पापं कर्तुमनिच्छन्नपि केन प्रयुक्तः प्रेरितोऽयं पुरुषः पापं चरति । कामक्रोधौ विवेकबलेन निरुन्धतोऽपि पुरुषस्य पुनः पापे प्रवृत्तिदर्शनादन्योऽपि तयोर्मूलभूतः कश्चित्प्रवर्तको भवेदिति संभावनया प्रश्नः ॥ ३६ ॥

अत्रोत्तरं—

श्रीभगवानुवाच ।

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

काम एष इति । यस्त्वया पृष्टो हेतुरेष काम एव । ननु क्रोधोऽपि पूर्वं त्वयोक्तः 'इन्द्रियस्येन्द्रियस्य' इत्यत्र । सत्यम्, नासौ ततः पृथक्, किंतु क्रोधोऽप्येष एव, काम एव हि केनचित्प्रतिहतः क्रोधात्मना परिणमते । अतः पूर्वं पृथक्त्वेनोक्तोऽपि क्रोधः कामजय एव क्रोधजय इत्यभिप्रायेण कामेनैकीकृत्योच्यते । रजोगुणात्समुद्भवतीति तथा । अनेन सत्त्ववृद्ध्या रजसि क्षयं नीते सति कामोऽपि क्षीयत इति सूचितम् । एनं काममिह मोक्षमार्गे वैरिणं विद्धि । अयं च वक्ष्यमाणक्रमेण हन्तव्य एव यतो नासौ दानेन संधातुं शक्य इत्याह—महाशनः महदशनं यस्य दुष्पूर इत्यर्थः । न च साम्ना संधातुं शक्यः, यतो महापाप्मा अत्युग्रः ॥ ३७ ॥

कामस्य वैरित्वं दर्शयति—

**धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।**
**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥**

धूमेनेति । यथा धूमेन सहजेन वह्निराव्रियत आच्छाद्यते, यथा चाऽऽदर्शो मलेनागन्तुकेन, यथा चोल्बेन गर्भवेष्टनचर्मणा गर्भः सर्वतो निरुध्यावृतः तथा प्रकारत्रयेणापि तेन कामेनावृतमिदम् ॥ ३८ ॥

इदंशब्दनिर्दिष्टं दर्शयन्वैरित्वं स्फुटयति—

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥**

आवृतमिति । इदं तु विवेकज्ञानमेतेनावृतम्, अज्ञस्य खलु भोगसमये कामः सुखहेतुरेव, परिणामे तु वैरितां प्रपद्यते । ज्ञानिनः पुनस्तत्कालमप्यनर्थानुसंधानाद्दुःखहेतुरेवेति नित्यवैरिणेत्युक्तम् । किंच विषयैः पूर्यमाणोऽपि दुष्पूरोऽपूर्यमाणः शोकसंतापहेतुत्वादनलतुल्यः । अनेन सर्वान्प्रति नित्यवैरित्वमुक्तम् ॥ ३९ ॥

इदानीं तस्याधिष्ठानं कथयन्जयोपायमाह—

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥**

इन्द्रियाणीति द्वाभ्याम् । विषयदर्शनश्रवणादिभिः संकल्पेनाध्यव-

सायेन च कामस्याविर्भावादिन्द्रियाणि च मनश्च बुद्धिश्चास्याधिष्ठानमुच्यते । एतैरिन्द्रियादिभिर्दर्शनादिव्यापारवद्भिराश्रयभूतैर्विवेकज्ञानमावृत्य देहिनं विमोहयति ॥ ४० ॥

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥**

यस्मादेवं **तस्मात्त्वमिति** । आदौ विमोहात्पूर्वमेवेन्द्रियाणि मनोबुद्धिं च नियम्य पापरूपमेनं कामं हि स्फुटं प्रजहि घातय । यद्वा प्रजहि परित्यज । ज्ञानमात्मविषयम्, विज्ञानं शास्त्रीयं तयोर्नाशकम् । यद्वा ज्ञानं शास्त्राचार्योपदेशजम्, विज्ञानं निदिध्यासनजम् । 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत' इति श्रुतेः ॥ ४१ ॥

अथात्र प्रसन्नतया चित्तप्रणिधानेनेन्द्रियाणि नियन्तुं शक्यन्ते तदात्मस्वरूपं देहादिभ्यो विविच्य दर्शयति—

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥**

**इन्द्रियाणीति** । इन्द्रियाणि देहादिभ्यो ग्राह्येभ्यः पराणि श्रेष्ठान्याहुः । सूक्ष्मत्वात्प्रकाशकत्वाच्च । अतएव तद्व्यतिरिक्तत्वमप्यर्थादुक्तं भवति । इन्द्रियेभ्यश्च संकल्पात्मकं मनः परम्, तत्प्रवर्तकत्वात् । मनसस्तु बुद्धिर्निश्चयात्मिका परा, निश्चयपूर्वकत्वात्संकल्पस्य । यस्तु बुद्धेः परः तत्साक्षित्वेनावस्थितः सर्वान्तरः स आत्मा विमोहयति देहिनमिति देहिशब्दोक्त आत्मा स इति परामृश्यते ॥ ४२ ॥

उपसंहरति—

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥**

इति श्रीमद्भगवद्गीतासूपनित्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

**एवमिति** । बुद्धेरेव विषयेन्द्रियादिजन्याः कामादिविक्रियाः आत्मा तु निर्विकारस्तत्साक्षीत्येवं बुद्धेः परमात्मानं बुद्ध्वा आत्मना एवंभूतनिश्चयात्मिकया बुद्ध्यात्मानं मनः संस्तभ्य निश्चलं कृत्वा कामरूपं शत्रुं जहि मारय । दुरासदं दुःखेनासादनीयम् । दुर्विज्ञेयगतिमित्यर्थः ॥ ४३ ॥

स्वधर्मेण यमाराध्य भक्त्या मुक्तिमिता बुधाः ।
तं कृष्णं परमानन्दं तोषयेत्सर्वकर्मभिः ॥ १ ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां कर्मयोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ४

आविर्भावतिरोभावावाविष्कर्तुं स्वयं हरिः ।
तत्त्वंपदविवेकार्थं कर्मयोगं प्रशंसति ॥ १ ॥

एवं तावदध्यायद्वयेन कर्मयोगोपायो ज्ञानयोगोपायश्च मोक्षसाधनत्वेनोक्तः, तमेव ब्रह्मार्पणादिगुणविधानेन तत्त्वंपदार्थविवेकादिना च प्रपञ्चयिष्यन्प्रथमं तावत्परम्पराप्राप्तत्वेन स्तुवन्—

श्रीभगवानुवाच ।

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥**

इममिति त्रिभिः । अव्ययफलत्वादव्ययं इमं योगं पुराहं विवस्वते आदित्याय कथितवान् । स च स्वपुत्राय मनवे श्राद्धदेवाय प्राह । स च मनुः स्वपुत्रायेक्ष्वाकवेऽब्रवीत् ॥ १ ॥

**एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।**
**स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥**

एवमिति । राजानश्च त ऋषयश्चान्येऽपि राजर्षयो निमिप्रमुखाः स्वपित्रादिभिरिक्ष्वाकुप्रमुखैः प्रोक्तमिमं योगं विदुर्जानन्ति स्म । अद्यतनानामज्ञाने कारणमाह—हे परंतप शत्रुतापन, स योगः कालवशादिह लोके नष्टो विच्छिन्नः ॥ २ ॥

**स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।**
**भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥**

स एवायमिति । स एवायं योगोऽद्य विच्छिन्ने संप्रदाये सति पुनश्च मया ते तुभ्यमुक्तः यतस्त्वं मम भक्तोऽसि सखा चेति । अन्यस्मै मया नोच्यते । हि यस्मादिदमुत्तमं रहस्यम् ॥ ३ ॥

भगवतो विवस्वन्तं प्रति योगोपदेशासंभवं पश्यन्—

अर्जुन उवाच ।

**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥**

अपरमिति । अपरमर्वाचीनं तव जन्म, परं प्राक्कालीनं विवस्वतो जन्म, तस्मात्त्वाधुनिकत्वाच्चिरंतनाय विवस्वते त्वमादौ योगं प्रोक्तवानित्येतत्कथमहं विजानीयां ज्ञातुं शक्नुयाम् ॥ ४ ॥

इति पृष्टवन्तमर्जुनं रूपान्तरेणोपदिष्टवानित्यभिप्रायेणोत्तरम्—

श्रीभगवानुवाच ।

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥**

**बहूनीति** । मम बहूनि जन्मानि तव च व्यतीतानि । तानि सर्वाण्यहं वेद जानामि, अलुप्तविद्याशक्तित्वात् । त्वं तु न वेत्थ न जानासि अविद्यावृतत्वात् ॥ ५ ॥

नन्वनादेस्तव कुतो जन्म, अविनाशिनश्च कथं पुनः पुनर्जन्म येन बहूनि मे व्यतीतानीत्युच्यते । ईश्वरस्य च तव पुण्यपापविहीनस्य कथं जीववज्जन्मेत्यत आह—

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥**

**अजोऽपीति** । सत्यमेवं तथाप्यजोऽपि सन्नहं, तथाव्ययात्माप्यनश्वरस्वभावोऽपि सन्, तथा ईश्वरोऽपि कर्मपारतन्त्र्यरहितोऽपि सन्स्वमायया संभवामि सम्यगप्रच्युतज्ञानबलवीर्यादिशक्त्यैव भवामि । ननु तथापि षोडशकलात्मकलिङ्गदेहशून्यस्य तव कुतो जन्मेत्यत उक्तम् स्वां शुद्धसत्त्वात्मिकां प्रकृतिमधिष्ठाय स्वीकृत्य विशुद्धोर्जितसत्त्वमूर्त्या स्वेच्छयावतरामीत्यर्थः ॥ ६ ॥

कदा संभवसीत्यपेक्षायामाह—

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥**

**यदा यदेति** । धर्मस्य ग्लानिर्हानिः अधर्मस्याभ्युत्थानमाधिक्यम् ॥ ७ ॥

किमर्थमित्यपेक्षायामाह—

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥**

**परित्राणायेति** । साधूनां स्वधर्मवर्तिनां रक्षणाय । दुष्टं कर्म कुर्वन्तीति दुष्कृतस्तेषां वधाय च । एवं धर्मस्य संस्थापनार्थाय साधुरक्षणेन दुष्टवधेन च धर्मं स्थिरीकर्तुं युगे युगे तत्तदवसरे संभवामीत्यर्थः । नचैवं दुष्टनिग्रहं कुर्वतोऽपि नैर्घृण्यं शङ्कनीयम् । यथा चाहुः—‘लालने

ताडने मातुर्नाकारुण्यं यथाऽर्भके । तद्वदेव महेशस्य नियन्तुर्गुणदोषयोः' इति ॥ ८ ॥

एवं विधानामीश्वरजन्मकर्मणां ज्ञाने फलमाह—

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥९॥**

जन्मकर्मेति । मे जन्म स्वेच्छाकृतम्, कर्म च धर्मपालनरूपं दिव्यमलौकिकं तत्त्वतः परानुग्रहार्थमेवेति यो वेत्ति स देहाभिमानं त्यक्त्वा पुनर्जन्म नैति न प्राप्नोति किंतु मामेव प्राप्नोति ॥ ९ ॥

कथं जन्मकर्मज्ञानेन त्वत्प्राप्तिः स्यादित्यत्राह—

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

वीतरागेति । अहं शुद्धसत्त्वावतारैर्धर्मपरिपालनं करोमीति मदीयं परमकारुणिकत्वं ज्ञात्वा वीता विगता रागभयक्रोधा येभ्यस्ते विक्षेपाभावात् । मन्मया मदेकचित्ता भूत्वा मामेवोपाश्रिताः सन्तो मत्प्रसादलभ्यं यदात्मज्ञानं च तपश्च तत्परिपाकहेतुः स्वधर्मस्तयोर्द्वन्द्वैकवद्भावः । तेन ज्ञानतपसा पूताः शुद्धा निरस्ताज्ञानतत्कार्यमलाः सन्तो मद्भावं मत्सायुज्यं प्राप्ता बहवः । नत्वधुनैव प्रवृत्तोऽयं मद्भक्तिमार्ग इत्यर्थः । तदेवं 'तान्यहं वेद सर्वाणि' इत्यादिना विद्याविद्योपाधिभ्यां तत्त्वंपदार्थावीश्वरजीवौ प्रदर्श्येश्वरस्य चाविद्याभावेन नित्यशुद्धत्वाज्जीवस्य चेश्वरप्रसादलब्धज्ञानेनाज्ञाननिवृत्तेः शुद्धस्य सतश्चिदंशेन तदैक्यमुक्तमिति द्रष्टव्यम् ॥ १० ॥

ननु तर्हि किं त्वय्यपि वैषम्यमस्ति, यस्मादेवं त्वदेकशरणानामेवात्मभावं ददासि नान्येषां सकामानामित्यत आह—

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥**

ये यथेति । यथा येन प्रकारेण सकामतया निष्कामतया वा ये मां भजन्ति तानहं तथैव तदपेक्षितफलदानेन भजाम्यनुगृह्णामि, न तु ये सकामा मां विहायेन्द्रादीनेव भजन्ते तानहमुपेक्ष इति मन्तव्यम् । यतः सर्वशः सर्वप्रकारैरिन्द्रादिसेवका अपि ममैव वर्त्म भजनमार्गमनुवर्तन्ते । इन्द्रादिरूपेणापि ममैव सेव्यत्वात् ॥ ११ ॥

तर्हि मोक्षार्थमेव किमिति सर्वे त्वां न भजन्तीत्यत आह—

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥**

काङ्क्षन्त इति । कर्मणां सिद्धिं फलं काङ्क्षन्तः प्रायश इह मनुष्यलोके इन्द्रादिदेवता एव यजन्ते नतु साक्षान्मामेव । हि यस्मात्कर्मजा सिद्धिः कर्मजं फलं शीघ्रं भवति न तु ज्ञानफलं कैवल्यम् । दुष्प्राप्यत्वाज्ज्ञानस्य ॥ १२ ॥

ननु केचित्सकामतया प्रवर्तन्ते केचिन्निष्कामतयेति कर्मवैचित्र्यम्, तत्कर्तॄणां च ब्राह्मणादीनामुत्तममध्यमादिवैचित्र्यं कुर्वतस्तव कथं वैषम्यं नास्तीत्याशङ्क्याह—

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥**

चातुर्वर्ण्यमिति । चत्वारो वर्णा एव चातुर्वर्ण्यम् । स्वार्थे ष्यञ्प्रत्ययः । अयमर्थः—सत्त्वप्रधाना ब्राह्मणास्तेषां शमदमादीनि कर्माणि, सत्त्वरजःप्रधानाः क्षत्रियास्तेषां च शौर्ययुद्धादीनि कर्माणि, रजस्तमःप्रधाना वैश्यास्तेषां कृषिवाणिज्यादीनि कर्माणि, तमःप्रधानाःशूद्रास्तेषां च त्रैवर्णिकशुश्रूषादिकर्माणीत्येवं गुणानां कर्मणां च विभागैश्चातुर्वर्ण्यं मयैव सृष्टमिति सत्यं, तथाप्येवं तस्य कर्तारमपि फलतोऽकर्तारमेव मां विद्धि । तत्र हेतुः—अव्ययं, आसक्तिराहित्येन नाशरहितम् ॥ १३ ॥

तदेव दर्शयन्नाह—

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥**

न मामिति । कर्माणि विश्वसृष्ट्यादीन्यपि मां न लिम्पन्ति आसक्तं न कुर्वन्ति । निरहङ्कारत्वात् आप्तकामत्वेन मम कर्मफले स्पृहाभावाच्च । मां न लिम्पन्तीति किं वक्तव्यम्, यतः कर्मफले स्पृहाराहित्येन मां योऽभिजानाति सोऽपि कर्मभिर्न बध्यते । मम निर्लेपत्वे कारणं निरहङ्कारत्वनिःस्पृहत्वादिकं जानतस्तस्याप्यहङ्कारादिशैथिल्यात् ॥ १४ ॥

'ये यथा मां प्रपद्यन्ते' इत्यादिचतुर्भिः श्लोकैः प्रासङ्गिकमीश्वरस्य वैषम्यं परिहृत्य पूर्वोक्तमेव कर्मयोगं प्रपञ्चयितुमनुस्मारयति—

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥**

एवमिति । अहंकारादिराहित्येन कृतं कर्म बन्धकं न भवतीत्येवं ज्ञात्वा पूर्वैर्जनकादिभिरपि मुमुक्षुभिः सत्त्वशुद्ध्यर्थं पूर्वतरं युगान्तरेष्वपि कृतम् । तस्मात्त्वमपि प्रथमं कर्मैव कुरु ॥ १५ ॥

तच्च तत्त्वविद्भिः सह विचार्य कर्तव्यं न लोकपरम्परामात्रेणेत्याह—

**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१६॥**

किं कर्मेति । किं कर्म कीदृशं कर्मकरणम्, किमकर्म कीदृशं कर्माकरणमित्येतस्मिन्नर्थे विवेकिनोऽपि मोहिताः, अतो यज्ज्ञात्वानुष्ठाय अशुभात्संसारान्मोक्ष्यसे मुक्तो भविष्यसि, तत्कर्माकर्म च तुभ्यमहं प्रवक्ष्यामि शृणु ॥ १६ ॥

ननु लोकप्रसिद्धमेव कर्म देहादिव्यापारात्मकम्, अकर्म च तदव्यापारात्मकम्, अतः कथमुच्यते कवयोऽप्यत्र मोहं प्राप्ता इति तत्राह—

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥**

कर्मण इति । कर्मणो विहितव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति न तु लोकसिद्धमात्रमेव । अकर्मणोऽव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति । विकर्मणोऽपि निषिद्धस्यापि तत्त्वं बोद्धव्यमस्ति । यतः कर्मणो गतिर्गहना । कर्मण इत्युपलक्षणार्थम् । कर्माकर्मविकर्मणां तत्त्वं दुर्विज्ञेयमित्यर्थः ॥ १७ ॥

तदेवं कर्मादीनां दुर्विज्ञेयत्वं दर्शयन्नाह—

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**
**स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥**

कर्मण्यकर्मेति । परमेश्वराराधनलक्षणे कर्मणि विषये अकर्म कर्मेदं न भवतीति यः पश्येत्तस्य ज्ञानहेतुत्वेन बन्धकत्वाभावात्, अकर्मणि च विहिताकरणे कर्म यः पश्येत्तस्य प्रत्यवायापादकत्वेन बन्धहेतुत्वात् । मनुष्येषु कर्मकुर्वाणेषु स बुद्धिमान्व्यवसायात्मकबुद्धिमत्त्वाच्छ्रेष्ठः । तं स्तौति—स युक्तः योगी तेन कर्मणा ज्ञानयोगावाप्तेः स एव कृत्स्नकर्मकर्ता च । सर्वतः संप्लुतोदकस्थानीये तस्मिन्कर्मणि सर्वकर्मफलानामन्तर्भूतत्वात् । तदेवमारुरुक्षोः कर्मयोगाधिकारावस्थायां 'न कर्मणामनारम्भात्' इत्यादिनोक्त एव कर्मयोगः स्फुटीकृतः । तत्प्रपञ्चरूपत्वाच्चास्य प्रकरणस्य न पौन-

रुत्त्यदोषः। अनेनैव योगारूढावस्थायां 'यस्त्वात्मरतिरेव स्यात्' इत्यादिना यः कर्मानुपयोग उक्तस्तस्याप्यर्थात्प्रपञ्चः कृतो वेदितव्यः। यदा आरुरुक्षोरपि कर्म बन्धकं न भवति तदा आरूढस्य कुतो बन्धकं स्यादित्यत्रापि श्लोको योज्यते—कर्मणि देहेन्द्रियादिव्यापारे वर्तमानेऽप्यात्मनो देहादिव्यतिरेकानुभवेनाकर्म स्वाभाविकं नैष्कर्म्यमेव यः पश्येत्, तथा कर्मणि च ज्ञानरहिते दुःखबुद्ध्या कर्मणां त्यागे कर्म यः पश्येत्, तस्य प्रतिबन्धकत्वेन मिथ्याचारत्वात्। तदुक्तं 'कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्' इति य एवंभूतः स तु सर्वेषु मनुष्येषु बुद्धिमान्पण्डितः। तत्र हेतुः—यतः कृत्स्नानि सर्वाणि यदृच्छया प्राप्तान्याहारादीनि कर्माणि कुर्वन्नपि स युक्त एवाकर्त्रात्मज्ञानेन समाधिस्थ एवेत्यर्थः। अनेनैव ज्ञानिनः स्वभावादापन्नं कलञ्जभक्षणादिकं न दोषाय, अज्ञस्य तु रागतः कृतं दोषायेति विकर्मणोऽपि तत्त्वं निरूपितं द्रष्टव्यम् ॥ १८ ॥

'कर्मण्यकर्म यः पश्येत्' इति श्रुत्यर्थार्थापत्तिभ्यां यदुक्तमर्थद्वयं तदेव स्पष्टयति यस्येत्यादिपञ्चभिः—

**यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥**

यस्येति। सम्यगारभ्यन्त इति समारम्भाः कर्माणि। काम्यत इति कामः फलं तत्संकल्पेन वर्जिता यस्य भवन्ति तं पण्डितमाहुः। तत्र हेतुः—यतस्तैः समारम्भैः शुद्धे चित्ते सति जातेन ज्ञानाग्निना दग्धान्यकर्मतां नीतानि कर्माणि यस्य तम्। आरूढावस्थायां तु कामः फलविषयस्तदर्थमिदं कर्म कर्तव्यमिति कर्मविषयः संकल्पश्च ताभ्यां वर्जितः। शेषं स्पष्टम् ॥ १९ ॥

किंच—

**त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ २० ॥**

त्यक्त्वेति। कर्मणि तत्फले चासक्तिं त्यक्त्वा नित्येन निजानन्देन तृप्तः अतएव योगक्षेमार्थमाश्रयणीयरहितः। एवंभूतो यः स्वाभाविके विहिते च कर्मण्यभितः प्रवृत्तोऽपि किंचिदपि नैव करोति तस्य कर्माकर्मतामापद्यत इत्यर्थः ॥ २० ॥

किंच—

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।**
**शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥**

निराशीरिति । निर्गता आशिषः कामना यस्मात् । यतं नियतं चित्तं आत्मा शरीरं यस्य । त्यक्ताः सर्वे परिग्रहा येन सः । शारीरं शरीरमात्रनिर्वर्त्यं कर्तृत्वाभिनिवेशरहितं कर्म कुर्वन्नपि किल्बिषं बन्धनं न प्राप्नोति । योगारूढपक्षे शरीरनिर्वाहमात्रोपयोगि स्वाभाविकं भिक्षाटनादि कर्म कुर्वन्नपि किल्बिषं विहिताकरणनिमित्तं दोषं न प्राप्नोतीति ॥ २१ ॥

किंच—

**यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।**
**समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२ ॥**

यदृच्छेति । अप्रार्थितोपस्थितो लाभो यदृच्छालाभः । तेन संतुष्टः । द्वन्द्वानि शीतोष्णादीन्यतीतोऽतिक्रान्तः । तत्सहनशील इत्यर्थः । विमत्सरो निर्वैरः । यदृच्छालाभस्यापि सिद्धावसिद्धौ च समो हर्षविषादरहितः । य एवंभूतः स पूर्वोत्तरभूमिकयोर्यथायथं विहितं स्वाभाविकं वा कर्म कृत्वापि न बन्धं प्राप्नोति ॥ २२ ॥

किंच—

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥**

गतसङ्गस्येति । गतसङ्गस्य निष्कामस्य रागादिभिर्मुक्तस्य । ज्ञानेऽवस्थितं चेतो यस्य तस्य यज्ञाय परमेश्वरार्थं कर्माचरतः सतः समग्रं सवासनं कर्म प्रविलीयते अकर्मभावमापद्यते । आरूढयोगपक्षे यज्ञायेति यज्ञसंरक्षणार्थं लोकसंग्रहार्थमेव कर्म कुर्वत इत्यर्थः ॥ २३ ॥

तदेवं परमेश्वराराधनलक्षणं कर्म ज्ञानहेतुत्वेन बन्धकत्वाभावादकर्मैव । आरूढावस्थायां त्वकर्त्रात्मज्ञानेन बाधितत्वात्स्वाभाविकमपि कर्माकर्मैवेति 'कर्मण्यकर्म यः पश्येत्' इत्यनेनोक्तः कर्मप्रविलयः प्रपञ्चितः । इदानीं कर्मणि तदङ्गेषु च ब्रह्मैवानुस्यूतं पश्यतः कर्मप्रविलयमाह—

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना ॥ २४ ॥**

ब्रह्मार्पणमिति । अर्प्यतेऽनेनेत्यर्पणं स्रुवादि तदपि ब्रह्मैव । अर्प्यमाणं हविरपि घृतादिकं ब्रह्मैव । ब्रह्मैवाग्निस्तस्मिन्ब्रह्मणा कर्त्रा च हुतं होमः अग्निश्च कर्ता च क्रिया च ब्रह्मैवेत्यर्थः । एवं ब्रह्मण्येव

कर्मात्मके समाधिश्चित्तैकाग्र्यं यस्य तेन ब्रह्मैव गन्तव्यं प्राप्यं नतु फलान्तरमित्यर्थः ॥ २४ ॥

एतदेव यज्ञत्वेन संपादितं सर्वत्र ब्रह्मदर्शनलक्षणं ज्ञानं सर्वयज्ञोपायप्राप्यत्वात्सर्वयज्ञेभ्यः श्रेष्ठमित्येवं स्तोतुं अधिकारिभेदेन ज्ञानोपायभूतान्बहून्यज्ञानाह—

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥**

**दैवमित्यष्टभिः श्लोकैः** । देवा इन्द्रवरुणादय इज्यन्ते यस्मिन् । एवकारेणेन्द्रादिषु ब्रह्मबुद्धिराहित्यं दर्शितम् । तं दैवमेव यज्ञं अपरे कर्मयोगिनः पर्युपासते श्रद्धयाऽनुतिष्ठन्ति । अपरे तु ज्ञानयोगिनो ब्रह्मरूपेऽग्नौ यज्ञेनैवोपायभूतेन ब्रह्मार्पणमित्युक्तप्रकारेण यज्ञमुपजुह्वति । यज्ञादिसर्वकर्माणि प्रविलापयन्तीत्यर्थः । सोऽयं ज्ञानयज्ञः ॥ २५ ॥

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥**

**श्रोत्रादीनीति** । अन्ये नैष्ठिकब्रह्मचारिणस्तत्तदिन्द्रियसंयमरूपेष्वग्निषु श्रोत्रादीनि जुह्वति प्रविलापयन्ति । इन्द्रियाणि निरुध्य संयमप्रधानास्तिष्ठन्तीत्यर्थः । इन्द्रियाण्येवाग्नयस्तेषु शब्दादीनन्ये गृहस्था जुह्वति । विषयभोगसमयेप्यनासक्ताः सन्तोऽग्नित्वेन भावितेष्विन्द्रियेषु हविष्ट्वेन भाविताञ्छब्दादीन्प्रक्षिपन्तीत्यर्थः ॥ २६ ॥

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥**

**सर्वाणीति** । अपरे ध्याननिष्ठाः बुद्धीन्द्रियाणां श्रोत्रादीनां कर्माणि श्रवणदर्शनादीनि । कर्मेन्द्रियाणां वाक्पाण्यादीनां कर्माणि वचनोपादानादीनि च । प्राणानां दशानां कर्माणि । प्राणस्य बहिर्गमनम् । अपानस्याधो नयनम् । व्यानस्य व्यानयनमाकुञ्चनप्रसारणादि । समानस्याशितपीतादीनां सम्यगुन्नयनम् । उदानस्योर्ध्वनयनम् । 'उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः । कृकरः क्षुतकृज्ज्ञेयो देवदत्तो विजृम्भणे । न जहाति मृतं चापि सर्वव्यापी धनंजयः' इत्येवंरूपाणि जुह्वति । कु । आत्मनि संयमो ध्यानैकाग्र्यं स एव योगः स एवाग्नि-

स्तस्मिन् ज्ञानेन ध्येयविषयेण दीपिते प्रज्वलिते ध्येयं सम्यग्ज्ञात्वा तस्मिन्मनः संयम्य तानि सर्वाणि कर्माण्युपरमयन्तीत्यर्थः ॥ २७ ॥

किंच—

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥**

द्रव्येति । द्रव्यदानमेव यज्ञो येषां ते द्रव्ययज्ञाः । कृच्छ्रचान्द्रायणादितप एव यज्ञो येषां ते तपोयज्ञाः । योगश्चित्तवृत्तिनिरोधलक्षणः समाधिः स एव यज्ञो येषां ते योगयज्ञाः । स्वाध्यायेन वेदेन श्रवणमननादिना यत्तदर्थज्ञानं तदेव यज्ञो येषां ते । अथवा वेदपाठयज्ञास्तदर्थज्ञानयज्ञाश्चेति द्विविधा यतयः प्रयत्नशीलाः । सम्यक् शितं निशितं तीक्ष्णीकृतं व्रतं येषां ते ॥ २८ ॥

किंच—

**अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥**

अपान इति । अपाने अधोवृत्तौ प्राणमूर्ध्ववृत्तिं पूरकेण जुह्वति पूरककाले प्राणमपानेनैकीकुर्वन्ति । तथा कुम्भकेन प्राणापानयोरूर्ध्वाधोगती रुद्ध्वा रेचककालेऽपानं प्राणे जुह्वति । एवं पूरककुम्भकरेचकैः प्राणायामपरायणा अपरे इत्यर्थः ॥ २९ ॥

किंच—

**अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥**

अपर इति । अपरे त्वाहारसंकोचमभ्यस्यन्तः स्वयमेव जीर्यमाणेष्विन्द्रियेषु तत्तदिन्द्रियवृत्तिलयं होमं भावयन्तीत्यर्थः । यद्वा—अपाने जुह्वति प्राणं प्राणेऽपानं तथा परे इत्यनेन पूरकरेचकयोरावर्त्यमानयोः हंसः सोहमित्यनुलोमतः प्रतिलोमतश्चाभिव्यज्यमानेनाजपामन्त्रेण तत्त्वंपदार्थैक्यं व्यतिहारेण भावयन्तीत्यर्थः । तदुक्तं योगशास्त्रे—'सकारेण बहिर्याति हकारेण विशेत्पुनः । प्राणस्तत्र स एवाहं हंस इत्यनुचिन्तयेत्' इति । प्राणापानगती रुद्ध्वेत्यनेन तु श्लोकेन प्राणायामयज्ञा अपरैः कथ्यन्ते । तत्रायमर्थः—'द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्' इत्येवमादिवचनोक्तो नियत आहारो येषां ते । कुम्भ-

केन प्राणापानगती रुद्ध्वा प्राणायामपरायणाः सन्तः प्राणानिन्द्रियाणि प्राणेषु जुह्वति। कुम्भके हि सर्वे प्राणा एकीभवन्तीति तत्रैव लीयमानेष्विन्द्रियेषु होमं भावयन्तीत्यर्थः। तदुक्तं योगशास्त्रे—'यथा यथा सदाभ्यासान्मनसः स्थिरता भवेत्। वायुवाक्कायदृष्टीनां स्थिरता च तथा तथा' इति। तदेवमुक्तानां द्वादशानां यज्ञविदां फलमाह—सर्वे इति। यज्ञान्विन्दन्ति लभन्त इति यज्ञविदः। यज्ञज्ञा इति वा। यज्ञैः क्षपितं नाशितं कल्मषं यैस्ते ॥ ३० ॥

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥**

**यज्ञशिष्टेति।** यज्ञान्कृत्वाऽवशिष्टे कालेऽनिषिद्धमन्नममृतरूपं भुञ्जत इति तथा ते सनातनं नित्यं ब्रह्म ज्ञानद्वारेण प्राप्नुवन्ति। तदकरणे दोषमाह—नायं लोक इति। अयमल्पसुखोऽपि मनुष्यलोकोऽयज्ञस्य यज्ञानुष्ठानशून्यस्य नास्ति। कुतोऽन्यः परलोकः। अतो यज्ञाः सर्वथा कर्तव्या इत्यर्थः ॥ ३१ ॥

ज्ञानयज्ञं स्तोतुमुक्तान्यज्ञानुपसंहरति—

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥**

**एवमिति।** ब्रह्मणो वेदस्य मुखे विततः। वेदेन साक्षाद्विहिता इत्यर्थः। तथापि तान्सर्वान्वाङ्मनःकायकर्मजनितानात्मस्वरूपसंस्पर्शरहितान्विद्धि जानीहि। आत्मनः कर्मागोचरत्वादेवं ज्ञात्वा ज्ञाननिष्ठः सन्संसाराद्विमुक्तो भविष्यसि ॥ ३२ ॥

कर्मयज्ञाज्ज्ञानयज्ञस्तु श्रेष्ठ इत्याह—

**श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥**

**श्रेयानिति।** द्रव्यमयादनात्मव्यापारजन्याद्दैवादियज्ञाज्ज्ञानयज्ञः श्रेयान् श्रेष्ठः। यद्यपि ज्ञानयज्ञस्यापि मनोव्यापाराधीनत्वमस्त्येव तथाप्यात्मस्वरूपस्य ज्ञानस्य मनःपरिणामेऽभिव्यक्तिमात्रं नतु तज्जन्यत्वमिति द्रव्यमयाद्विशेषः। श्रेष्ठत्वे हेतुः—सर्वं कर्माखिलं फलसहितं ज्ञाने परिसमाप्यते। अन्तर्भवतीत्यर्थः। 'सर्वं तदभिसमेति यत्किंचित्प्रजाः साधु कुर्वन्ति' इति श्रुतेः ॥ ३३ ॥

एवंभूतात्मज्ञाने साधनमाह—

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥**

**तद्विद्धीति ।** तज्ज्ञानं विद्धि प्राप्नुहि । ज्ञानिनां प्रणिपातेन दण्डवन्नमस्कारेण, ततः परिप्रश्नेन कुतोऽयं मम संसारः कथं वा निवर्तत इति प्रश्नेन, सेवया शुश्रूषया च ज्ञानिनः शास्त्रज्ञास्तत्त्वदर्शिनः अपरोक्षानुभवसंपन्नाश्च ते तुभ्यं ज्ञानमुपदेशेन संपादयिष्यन्ति ॥ ३४ ॥

ज्ञानफलमाह—

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥**

**यज्ज्ञात्वेति सार्धैस्त्रिभिः ।** यज्ज्ञानं ज्ञात्वा प्राप्य पुनर्बन्धुवधादिनिमित्तं मोहं न प्राप्स्यसि । तत्र हेतुः—येन ज्ञानेन भूतानि पितृपुत्रादीनि स्वाविद्यारचितानि स्वात्मन्येवाभेदेन द्रक्ष्यसि । अथो अनन्तरमात्मानं मयि परमात्मन्यभेदेन द्रक्ष्यसीत्यर्थः ॥ ३५ ॥

किंच—

**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥**

**अपि चेदिति ।** सर्वेभ्यः पापकारिभ्यो यद्यप्यतिशयेन पापकारी त्वमसि तथापि सर्वं पापसमुद्रं ज्ञानपोतेनैव सम्यगनायासेन तरिष्यसि ॥ ३६ ॥

समुद्रवत्स्थितस्यैव पापस्यातिलङ्घनमात्रं नतु पापस्य नाश इति भ्रान्तिं दृष्टान्तेन वारयन्नाह—

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥**

**यथेति ।** एधांसि काष्ठानि प्रदीप्तोऽग्निर्यथा भस्मीभावं नयति तथा आत्मज्ञानरूपोऽग्निः प्रारब्धकर्मव्यतिरिक्तानि सर्वाणि कर्माणि भस्मीकरोतीत्यर्थः ॥ ३७ ॥

तत्र हेतुमाह—

**नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥**

नहीति । पवित्रं शुद्धिकरं इह तपोयोगादिषु मध्ये ज्ञानतुल्यं नास्त्येव । तर्हि सर्वेऽप्यात्मज्ञानमेव किं नाभ्यस्यन्तीत्यत आह— तत्स्वयमिति सार्धेन । तदात्मनि विषये ज्ञानं कालेन महता कर्मयोगेन संसिद्धो योग्यतां प्राप्तः सन्स्वयमेवानायासेन लभते नतु कर्मयोगं विनेत्यर्थः ॥ ३८ ॥

किंच—

**श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥**

श्रद्धावानिति । श्रद्धावान् गुरूपदिष्टेऽर्थे आस्तिक्यबुद्धिमान् । तत्परस्तदेकनिष्ठः । संयतेन्द्रियश्च तज्ज्ञानं लभते नान्यः । अतः श्रद्धादिसंपत्त्या ज्ञानलाभात्प्राक्कर्मयोग एव शुद्ध्यर्थमनुष्ठेयः । ज्ञानलाभानन्तरं तु न तस्य किंचित्कृत्यमस्तीत्याह—ज्ञानं लब्ध्वा त्वचिरेण परां शान्तिं मोक्षं प्राप्नोति ॥ ३९ ॥

ज्ञानाधिकारिणमुक्त्वा तद्विपरीतमनधिकारिणमाह—

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥**

अज्ञश्चेति । अज्ञो गुरूपदिष्टार्थानभिज्ञः कथंचिज्ज्ञाने जातेऽप्यश्रद्दधानश्च जातायामपि श्रद्धायां ममेदं सिद्ध्येद्वा नवेति संशयाक्रान्तचित्तश्च नश्यति स्वार्थाद्भ्रश्यति । एतेषु त्रिष्वपि संशयात्मा सर्वथा नश्यति यतस्तस्यायं लोको नास्ति, धनार्जनविवाहाद्यसिद्धेः । न च परलोकः, धर्मस्यानिष्पत्तेः । न च सुखं, संशयेनैव भोगस्याप्यसंभवात् ॥ ४० ॥

अध्यायद्वयोक्तां पूर्वापरभूमिकाभेदेन कर्मज्ञानमयीं द्विविधां ब्रह्मनिष्ठामुपसंहरति—

**योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ४१ ॥**

योगेति द्वाभ्याम् । योगेन परमेश्वराराधनरूपेण तस्मिन्संन्यस्तानि समर्पितानि कर्माणि येन तं पुरुषं कर्माणि स्वफलैर्निबध्नन्ति । अतश्च ज्ञानेनाकर्त्रात्मबोधेन संछिन्नः संशयो देहाद्यभिमानलक्षणो यस्य तं चात्मवन्तमप्रमादिनं कर्माणि लोकसंग्रहार्थानि स्वाभाविकानि वा न निबध्नन्ति ॥ ४१ ॥

यस्मादेवम्—

**तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥**

इति श्रीमद्भगवद्गीतासू० ज्ञानयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

तस्मादिति । आत्मनोऽज्ञानेन संभूतं हृदि स्थितमेनं संशयं शोकादिनिमित्तं देहात्मविवेकज्ञानखड्गेन छित्त्वा परमात्मज्ञानोपायभूतं कर्मयोगमातिष्ठाश्रय । तत्र च प्रथमं प्रस्तुताय युद्धायोत्तिष्ठ । हे भारत इति क्षत्रियत्वेन युद्धस्य धर्म्यत्वं दर्शितम् ॥ ४२ ॥

पुमवस्थादिभेदेन कर्मज्ञानमयी द्विधा ।
निष्ठोक्ता येन तं वन्दे शौरिं संशयसंछिदम् ॥ १ ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां
ज्ञानयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ५

निवार्य संशयं जिष्णोः कर्मसंन्यासयोगयोः ।
जितेन्द्रियस्य च यतेः पञ्चमे मुक्तिमब्रवीत् ॥ १ ॥

अज्ञानसंभूतं संशयं ज्ञानासिना छित्त्वा कर्मयोगमातिष्ठेत्युक्तं तत्र पूर्वापरविरोधं मन्वानः—

अर्जुन उवाच ।

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥**

संन्यासमिति । 'यस्त्वात्मरतिरेव स्यात्' इत्यादिना 'सर्वं कर्माखिलं पार्थ' इत्यादिना च ज्ञानिनः कर्मसंन्यासं कथयसि । ज्ञानासिना संशयं छित्त्वा योगमातिष्ठेति पुनर्योगं च कथयसि । न च कर्मसंन्यासः कर्मयोगश्चैकस्यैकदैव संभवतः, विरुद्धस्वरूपत्वात् । तस्मादेतयोर्मध्ये एकस्मिन्ननुष्ठातव्ये सति मम यच्छ्रेयः श्रेष्ठं सुनिश्चितं तदेकं ब्रूहि ॥ १ ॥

अत्रोत्तरम्—

श्रीभगवानुवाच ।

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥**

संन्यास इति । अयं भावः—नहि वेदान्तवेद्यात्मतत्त्वविदं प्रति कर्मयोगमहं ब्रवीमि, यतः पूर्वोक्तेन संन्यासेन विरोधः स्यात् अपितु देहात्माभिमानिनं त्वां बन्धुवधादिनिमित्तशोकमोहादिकृतमेनं संशयं देहात्मविवेकज्ञानासिना छित्त्वा परमात्मज्ञानोपायभूतं कर्मयोगमातिष्ठेति ब्रवीमि । कर्मयोगेन शुद्धचित्तस्य चात्मतत्त्वज्ञाने जाते सति तत्परिपाकार्थं ज्ञाननिष्ठाङ्गत्वेन संन्यासः पूर्वमुक्तः । एवं सत्यङ्गप्रधानयोर्विकल्पायोगात्संन्यासः कर्मयोगश्चेत्येतावुभावपि भूमिकाभेदेन समुच्चितावेव निःश्रेयसं साधयतः तथापि तु तयोर्मध्ये कर्मसंन्यासात्सकाशात्कर्मयोगो विशिष्यते विशिष्टो भवति ॥ २ ॥

कुतइत्यपेक्षायां संन्यासित्वेन कर्मयोगं स्तुवन् तस्य श्रेष्ठत्वं दर्शयति—

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३ ॥**

ज्ञेय इति । रागद्वेषादिराहित्येन परमेश्वरार्थं कर्माणि योऽनुतिष्ठति स नित्यं कर्मानुष्ठानकालेऽपि संन्यासीत्येव ज्ञेयः । तत्र हेतुः—निर्द्वन्द्वो रागद्वेषादिद्वन्द्वशून्यो हि शुद्धचित्तो ज्ञानद्वारा सुखमनायासेनैव बन्धात् संसारात्प्रमुच्यते ॥ ३ ॥

यस्मादेवमङ्गप्रधानत्वेनोभयोरवस्थाभेदेन क्रमसमुच्चयः, अतो विकल्पमङ्गीकृत्योभयोः कः श्रेष्ठ इति प्रश्नोऽज्ञानिनामेवोचितो न विवेकिनामित्याह—

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥**

सांख्ययोगाविति । सांख्यशब्देन ज्ञाननिष्ठावाचिना तदङ्गं संन्यासं लक्षयति । संन्यासकर्मयोगावेकफलौ सन्तौ पृथक्स्वतन्त्राविति बाला अज्ञा एव प्रवदन्ति नतु पण्डिताः । तत्र हेतुः—अनयोरेकमपि सम्यगास्थित आश्रितः सन्नुभयोरपि फलं प्राप्नोति । तथाहि—कर्मयोगं सम्यगनुतिष्ठन् शुद्धचित्तः सन् ज्ञानद्वारा यदुभयोः फलं कैवल्यं तद्विन्दति । संन्यासं सम्यगास्थितोऽपि पूर्वमनुष्ठितस्य कर्मयोगस्यापि परम्परया ज्ञानद्वारा यदुभयोः फलं कैवल्यं तद्विन्दतीति न पृथक्फलत्वमनयोरित्यर्थः ॥ ४ ॥

चराचरसहितं जगदिहास्मिन्मम देहेऽवयवरूपेणैकत्रैव स्थितमद्याधुनैव पश्य । यच्चान्यज्जगदाश्रयभूतं कारणस्वरूपं जगतश्चावस्थाविशेषादिकं जयपराजयादिकं च यदप्यन्यद्द्रष्टुमिच्छसि तत्सर्वं पश्य ॥ ७ ॥

यदुक्तमर्जुनेन 'मन्यसे यदि तच्छक्यम्' इति तत्राह—

**न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥**

**न त्विति** । अनेनैव तु स्वीयेन चर्मचक्षुषा मां द्रष्टुं न शक्यसे शक्तो न भविष्यसि । अतोऽहं दिव्यमलौकिकं ज्ञानात्मकं चक्षुस्तुभ्यं ददामि । ममैश्वरमसाधारणं योगं युक्तिमघटितघटनासामर्थ्यं पश्य ॥ ८ ॥

एवमुक्त्वा भगवानर्जुनाय रूपं दर्शितवान् । तच्च रूपं दृष्ट्वार्जुनः श्रीकृष्णं विज्ञापितवानितीममर्थं 'एवमुक्त्वा' इत्यादिभिः षड्भिः श्लोकैर्धृतराष्ट्रं प्रति—

संजय उवाच ।

**एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥**

**एवमिति** । हे राजन् धृतराष्ट्र, महांश्चासौ योगेश्वरश्च हरिः परममैश्वरं रूपं दर्शितवान् ॥ ९ ॥

कथंभूतं तदित्यत आह—

**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।**
**अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥**

**अनेकेति** । अनेकानि वक्त्राणि नयनानि च यस्मिंस्तत् । अनेकानामद्भुतानां दर्शनं यस्मिंस्तत् । अनेकानि दिव्याभरणानि यस्मिंस्तत् । दिव्यान्यनेकानि उद्यतान्यायुधानि च यस्मिंस्तत् ॥ १० ॥

किंच—

**दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।**
**सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥**

**दिव्येति** । दिव्यानि माल्याम्बराणि च धारयतीति तथा । दिव्यो गन्धो यस्य तादृशमनुलेपनं यस्य तत् । सर्वाश्चर्यमयमनेकाश्चर्यप्रायम् । देवं द्योतनात्मकम् । अनन्तमपरिच्छिन्नम् । विश्वतः सर्वतो मुखानि यस्मिंस्तत् ॥ ११ ॥

विश्वरूपदीप्तेर्निरुपमत्वमाह—

**दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।**
**यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥**

दिवीति । दिव्याकाशे सूर्यसहस्रस्य युगपदुत्थितस्य यदि युगपदुत्थिता भाः प्रभा भवेत् तर्हि सा तदा महात्मनो विश्वरूपस्य भासः प्रभायाः कथंचित्सदृशी स्यात्, नान्योपमाऽस्तीत्यर्थः । तथाभूतं रूपं दर्शयामासेति पूर्वेणैवान्वयः ॥ १२ ॥

ततः किं वृत्तमित्यपेक्षायामाह संजयः—

**तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥**

तत्रेति । अनेकधा प्रविभक्तं नानाविभागेनावस्थितं कृत्स्नं जगद्देवदेवस्य शरीरे तदवयवत्वेनैकत्रैव पृथक् पृथगवस्थितं तदा पाण्डवोऽर्जुनोऽपश्यत् ॥ १३ ॥

एवं दृष्ट्वा किं कृतवानित्यत आह—

**ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥**

तत इति । ततो दर्शनानन्तरं विस्मयेनाविष्टो व्याप्तः सन् हृष्टान्युत्पुलकितानि रोमाणि यस्य स धनंजयो देवं तमेव शिरसा प्रणम्य कृताञ्जलिः संपुटीकृतहस्तो भूत्वाऽभाषत उक्तवान् ॥ १४ ॥

भाषणमेवाह—

अर्जुन उवाच ।

**पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान् ।**
**ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥**

पश्यामीति सप्तदशभिः । हे देव तव देहे देवानादित्यादीन्पश्यामि । तथा सर्वान्भूतविशेषाणां जरायुजाण्डजादीनां सङ्घांश्च । तथा दिव्यानृषीन्वसिष्ठादीन्, उरगांश्च तक्षकादीन् । तथा तेषां देवानामीशं स्वामिनं ब्रह्माणं च । कथंभूतम्, कमलासनस्थं पृथ्वीपद्मकर्णिकायां मेरौ स्थितम् । यद्वा त्वन्नाभिपद्मासनस्थम् ॥ १५ ॥

किंच—

**अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ।**
**नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥**

अनेकेति । अनेकानि बाह्वादीनि यस्य तादृशं पश्यामि । अनन्तानि रूपाणि यस्य तं त्वां सर्वतः पश्यामि । तव तु अन्तं मध्यमादिं च न पश्यामि सर्वगतत्वात् ॥ १६ ॥

किंच—

**किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।**
**पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् १७**

किरीटिनमिति । किरीटिनं मुकुटवन्तं गदिनं गदावन्तं चक्रिणं चक्रवन्तं च । सर्वतो दीप्तिमन्तं तेजःपुञ्जरूपं च । तथा दुर्निरीक्ष्यं द्रष्टुमशक्यम् । तत्र हेतुः—दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिस्तेजो यस्य तम् । अत एवाप्रमेयमेवंभूत इति निश्चेतुमशक्यं त्वां समन्ततः पश्यामि ॥१७॥

यस्मादेवं तवातर्क्यमैश्वर्यं तस्मात्—

**त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।**
**त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥१८॥**

त्वमिति । त्वमेवाक्षरं परमं ब्रह्म । कथंभूतम्, वेदितव्यं मुमुक्षुभिर्ज्ञातव्यम् । त्वमेवास्य विश्वस्य परं निधानं निधीयतेऽस्मिन्निति निधानं प्रकृष्ट आश्रयः । अतएव त्वमव्ययो नित्यः शाश्वतस्य नित्यस्य धर्मस्य गोप्ता पालकः सनातनश्चिरन्तनः पुरुषो मे मम मतः संमतोऽसि ॥१८॥

किंच—

**अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ।**
**पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥१९॥**

अनादीति । अनादिमध्यान्तमुत्पत्तिस्थितिप्रलयरहितम् । अनन्तवीर्यं अनन्तं वीर्यं प्रभावो यस्य तम् । अनन्तबाहुं अनन्ता वीर्यवन्तो बाहवो यस्य तम् । शशिसूर्यौ नेत्रे यस्य तादृशं त्वां पश्यामि । तथा दीप्तो हुताशोऽग्निर्वक्त्रेषु यस्य तम् । स्वतेजसा इदं विश्वं तपन्तं संतापयन्तं पश्यामि ॥ १९ ॥

किंच—

**द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।**
**दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥**

द्यावापृथिव्योरिति । द्यावापृथिव्योरिदमन्तरं हि अन्तरिक्षं त्वयैकेन व्याप्तम् । दिशश्च सर्वा व्याप्ताः । अद्भुतमदृष्टपूर्वं त्वदीयमिदमुग्रं घोरं रूपं दृष्ट्वा लोकत्रयं प्रव्यथितमतिभीतं पश्यामीति पूर्वस्यैवानुषङ्गः ॥२०॥

किंच—

**अमी हि त्वां सुरसङ्घा विशन्ति**
**केचिद्भीताः प्राञ्जलयो गृणन्ति ।**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः**
**स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥**

अमी हीति । अमी सुरसङ्घाः भीताः सन्तः त्वां विशन्ति शरणं प्रविशन्ति । तेषां मध्ये केचिदतिभीताः दूरत एव स्थित्वा कृतसंपुटकरयुगुलाः सन्तो गृणन्ति जय जय रक्ष रक्षेति प्रार्थयन्ते । स्पष्टमन्यत् ॥२१॥

किंच—

**रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।**
**गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥२२॥**

रुद्रेति । रुद्राश्चादित्याश्च वसवश्च ये च साध्या नाम देवाः, विश्वेदेवाः, अश्विनौ देवौ, मरुतो मरुद्गणाः, ऊष्माणं पिवन्तीत्यूष्मपाः पितरः । 'ऊष्मभागा हि पितरः' इत्यादिश्रुतेः । स्मृतिश्च—'यावदुष्णं भवेदन्नं यावदश्नन्ति वाग्यताः । पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः' इति । गन्धर्वाश्च यक्षाश्चासुराश्च विरोचनादयः सिद्धानां सङ्घाश्च ते सर्वे एव हि विस्मिताः सन्तः त्वां वीक्षन्त इत्यन्वयः ॥ २२ ॥

किंच—

**रूपं महत्ते वहुवक्त्रनेत्रं महावाहो वहुवाहूरुपादम् ।**
**वहूदरं वहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥२३॥**

रूपमिति । हे महाबाहो महदत्यूर्जितं तव रूपं दृष्ट्वा लोकाः सर्वे प्रव्यथिता अतिभीताः । तथाहं च प्रव्यथितोऽस्मि । कीदृशं रूपं दृष्ट्वा बहूनि वक्त्राणि नेत्राणि च यस्मिंस्तत् । बहवो बाहव ऊरवः पादाश्च यस्मिंस्तत् । बहूनि उदराणि यस्मिंस्तत् । बह्वीभिर्दंष्ट्राभिः करालं विकृतं रौद्रमित्यर्थः २३

न केवलं भीतोऽहमित्येतावदेव अपितु—

**नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।**
**दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो**

नभःस्पृशमिति । नभः स्पृशतीति नभःस्पृक् तं अन्तरिक्षव्यापिनमित्यर्थः । दीप्तं तेजोयुक्तम् । अनेके वर्णा यस्य तमनेकवर्णम् । व्यात्तानि विवृतान्याननानि यस्य तम् । दीप्तानि विशालानि नेत्राणि यस्य तम् । एवंभूतं त्वां दृष्ट्वा प्रव्यथितोऽन्तरात्मा मनो यस्य सोऽहं धृतिं धैर्यमुपशमं च न लभे २४

किंच—

**दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसंनिभानि ।**
**दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥२५॥**

दंष्ट्रेति । भो देवेश, तव मुखानि दृष्ट्वा भयावेशेन दिशो न जानामि शर्म सुखं च न लभे । भो जगन्निवास प्रसन्नो भव । कीदृशानि मुखानि दंष्ट्राभिः करालानि । कालानलः प्रलयाग्निस्तत्सदृशानि ॥ २५ ॥

यच्चान्यद्द्रष्टुमिच्छसीत्यनेनास्मिन्संग्रामे भाविजयपराजयादिकं च मम देहे पश्येति यद्भगवतोक्तं तदिदानीं पश्यन्नाह—

**अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसङ्घैः ।**
**भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः ॥२६॥**

अमी चेति पञ्चभिः । अमी धृतराष्ट्रस्य पुत्रा दुर्योधनादयः सर्वे अवनिपालानां जयद्रथादीनां राज्ञां सङ्घैः सहैव तव वक्त्राणि विशन्तीत्युत्तरेणान्वयः । तथा भीष्मश्च द्रोणश्चासौ सूतपुत्रः कर्णश्च । न केवलं त एव विशन्ति अपितु प्रतियोद्धारो येऽस्मदीया योधमुख्याः शिखण्डीधृष्टद्युम्नादयः तैः सह ॥ २६ ॥

**वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।**
**केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥२७॥**

वक्त्राणीति । य एते सर्वे त्वरमाणा धावन्तस्तव दंष्ट्राभिः करालानि वक्त्राणि विशन्ति तेषां मध्ये केचिच्चूर्णीकृतैरुत्तमाङ्गैः शिरोभिरुपलक्षिताः दन्तसंधिषु संश्लिष्टाः संदृश्यन्ते ॥ २७ ॥

प्रवेशमेव दृष्टान्तेनाह—

**यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।**
**तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति २८**

यथेति । नदीनामनेकमार्गप्रवृत्तानां बहवोऽम्बूनां वारीणां वेगाः प्रवाहाः समुद्राभिमुखाः सन्तो यथा समुद्रमेव द्रवन्ति प्रविशन्ति तथा अमी ये नरलोकवीरास्तेऽभिविज्वलन्ति सर्वतः प्रदीप्यमानानि तव वक्त्राणि प्रविशन्ति ॥ २८ ॥

अवशत्वेन प्रवेशे नदीवेगो दृष्टान्त उक्तः । बुद्धिपूर्वकप्रवेशे दृष्टान्तमाह—

**यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।**
**तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥**

यथेति। प्रदीप्तं ज्वलनमग्निं पतङ्गाः सूक्ष्मपक्षिविशेषाः बुद्धिपूर्वक समृद्धो वेगो येषां ते यथा नाशाय मरणायैव विशन्ति तथैव लोका एते जना अपि तव मुखानि प्रविशन्ति ॥ २९ ॥

ततः किमत आह—

**लेलिह्यसे ग्रसमानः समन्ताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः।**
**तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥३०॥**

लेलिह्यस इति। ग्रसमानो गिलन् समग्रांल्लोकान्सर्वानेतान्वीरान् समन्तात्सर्वतो लेलिह्यस अतिशयेन भक्षयसि। कैः ज्वलद्भिर्वदनैः किंच हे विष्णो, तव भासो दीप्तयस्तेजोभिर्विस्फुरणैः समस्तं जगद्व्या प्योग्रास्तीव्राः सत्यः प्रतपन्ति संतापयन्ति ॥ ३० ॥

यत एवं तस्मात्—

**आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद।**
**विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥३१**

आख्याहीति। भवानुग्ररूपः क इत्याख्याहि कथय। ते तुभ्यं नमोऽस्तु, हे देववर प्रसीद प्रसन्नो भव। भवन्तमाद्यं पुरुषं विशेषेण ज्ञातुमिच्छामि, यतस्तव प्रवृत्तिं चेष्टां किमर्थमेवंप्रवृत्तोऽसीति न जानामि एवंभूतस्य तव प्रवृत्तिं वार्तामपि न जानामीति वा ॥ ३१ ॥

एवं प्रार्थितः सन्—

श्रीभगवानुवाच।

**कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः।**
**ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः**

कालोऽस्मीति त्रिभिः। लोकानां क्षयकर्ता प्रवृद्धोऽत्युग्रः कालोऽस्मि लोकान्प्राणिनः संहर्तुमिह लोके प्रवृत्तोऽस्मि। अतः ऋतेऽपि त्वां, इति त्वां हन्तारं विनापि न भविष्यन्ति न जीविष्यन्ति। यद्यपि त्वया न हन्तव्या एते तथापि मया कालात्मना ग्रस्ताः सन्तो मरिष्यन्त्येव। के ते, प्रत्यनीकेषु अनीकान्यनीकानि प्रति भीष्मद्रोणादीनां सर्वासु सेनासु ये योद्धारोऽवस्थितास्ते सर्वेऽपि ॥ ३२ ॥

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम्।**
**मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥३३॥**

तस्मादिति। यस्मादेवं तस्मात्त्वं युद्धायोत्तिष्ठ। देवैरपि दुर्जया भीष्मद्रोणादयोऽर्जुनेन निर्जिता इत्येवंभूतं यशो लभस्व प्राप्नुहि।

अयत्नेन शत्रूञ्जित्वा समृद्धं राज्यं भुङ्क्ष्व । एते च तव शत्रवस्त्वदीययुद्धात्पूर्वमेव मयैव कालात्मना निहतप्रायास्तथापि त्वं निमित्तमात्रं भव । हे सव्यसाचिन्, सव्येन वामहस्तेन साचितुं शरान्संधातुं शीलं यस्येति व्युत्पत्त्या वामेनापि बाणक्षेपात्सव्यसाचीत्युच्यते ॥ ३३ ॥

'न चैतद्विद्मः कतरन्नो गरीयः' इत्यादिर्या शङ्का सापि न कार्येत्याह—

**द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान् ।**
**मया हतांस्त्वं जहि मा व्यथिष्ठा युद्ध्यस्व जेतासि रणे सपत्नान् ३४**

द्रोणं चेति । येभ्यस्त्वं शङ्कसे तान्द्रोणादीन्मयैव हतांस्त्वं जहि घातय । मा व्यथिष्ठाः भयं मा कार्षीः, सपत्नान् शत्रून् रणे युद्धे निश्चितं जेतासि जेष्यसि ॥ ३४ ॥

ततो यद्वृत्तं तद्धृतराष्ट्रं प्रति—

संजय उवाच ।

**एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ।**
**नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥३५॥**

एतदिति । एतत्पूर्वश्लोकत्रयात्मकं केशवस्य वचनं श्रुत्वा वेपमानः कम्पमानः किरीट्यर्जुनः कृताञ्जलिः संपुटीकृतहस्तः कृष्णं नमस्कृत्य पुनरप्याह उक्तवान् । कथमाह भयहर्षाद्यावेशवशाद्गद्गदेन कण्ठकम्पनेन सह वर्तत इति सगद्गदं यथा भवति तथा । किंच भीतादपि भीतः सन्प्रणम्यावनतो भूत्वा ॥ ३५ ॥

अर्जुन उवाच ।

**स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ।**
**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ३६**

स्थान इत्येकादशभिरर्जुनस्योक्तिः । स्थाने इत्यव्ययं युक्तमित्यस्मिन्नर्थे । हे हृषीकेश, यत एवं त्वमद्भुतप्रभावो भक्तवत्सलश्च अतस्तव प्रकीर्त्या माहात्म्यसंकीर्तनेन न केवलमहमेव प्रहृष्यामि किंतु जगत्सर्वं प्रहृष्यति प्रकर्षेण हर्षं प्राप्नोति एतत्तु स्थाने युक्तमित्यर्थः । तथा जगदनुरज्यते चानुरागं चोपैति इति यत्, तथा रक्षांसि भीतानि सन्ति दिशः प्रति द्रवन्ति पलायन्त इति यत्, सर्वे योगतपोमन्त्रादिसिद्धानां सङ्घा नमस्यन्ति प्रणमन्तीति यत्, एतच्च स्थाने युक्तमेव न चित्रमित्यर्थः ॥ ३६ ॥

तत्र हेतुमाह—

**कस्माच्च ते न नमेरन्महात्मन्गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।**
**अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥**

कस्मादिति । हे महात्मन्, हे अनन्त, हे देवेश, हे जगन्निवास, कस्माद्धेतोस्ते तुभ्यं न नमेरन्नमस्कारं न कुर्युः । कथंभूताय ब्रह्मणोऽपि गरीयसे गुरुतराय । आदिकर्त्रे च ब्रह्मणोऽपि जनकाय । किंच सत् व्यक्तं असदव्यक्तं च ताभ्यां परं मूलकारणं यदक्षरं ब्रह्म तच्च त्वमेव । एतैर्नवभिर्हेतुभिस्त्वां सर्वे नमस्यन्तीति न चित्रमित्यर्थः ॥३७॥

किंच—

**त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।**
**वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥३८॥**

त्वमिति । त्वमादिदेवो देवानामादिः । यतः पुराणोऽनादिः पुरुषस्त्वम् । अतएव त्वमस्य विश्वस्य परं निधानं लयस्थानम् । तथा विश्वस्य वेत्ता वेदिता ज्ञाता च त्वम् । यच्च वेद्यं वस्तुजातं परं च धाम वैष्णवं पदं तदपि त्वमेवासि । अतएव हे अनन्तरूप, त्वयैव विश्वमिदं ततं व्याप्तम् । एतैश्च सप्तभिर्हेतुभिस्त्वमेव नमस्कार्य इति भावः ॥३८॥

इतश्च त्वमेव सर्वैर्नमस्कार्यः सर्वदेवात्मकत्वादिति स्तुवन्स्वयमपि नमस्करोति—

**वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ।**
**नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते॥३९॥**

वायुरिति । वाय्वादिरूपस्त्वमिति सर्वदेवतात्मकत्वोपलक्षणार्थमुक्तम् । प्रजापतिः पितामहस्तस्यापि जनकत्वात्प्रपितामहस्त्वं अतस्ते तुभ्यं सहस्रकृत्वः सहस्रशो नमोऽस्तु । भूयोऽपि पुनरपि सहस्रकृत्वो नमो नम इति भक्तिश्रद्धाभरातिरेकेण नमस्कारेषु तृप्तिमनधिगच्छन्बहुशः प्रणमति ॥ ३९ ॥

किंच—

**नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।**
**अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥४०॥**

नम इति । हे सर्व सर्वात्मन्, सर्वतः सर्वास्वपि दिक्षु तुभ्यं नमोऽस्तु । सर्वात्मकत्वमुपपादयन्नाह—अनन्तं वीर्यं सामर्थ्यं यस्य, तथाप्यमितो

विक्रमः पराक्रमो यस्य सः, एवंभूतस्त्वं सर्वं विश्वं सम्यगन्तर्बहिश्च व्याप्नोषि, सुवर्णमिव कटककुण्डलादि स्वकार्यं व्याप्य वर्तसे ततः सर्वस्वरूपोऽसि ॥ ४० ॥

इदानीं भगवन्तं क्षमापयति—

**सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ।**
**अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि ॥ ४१ ॥**

सखेति द्वाभ्याम् । त्वं प्राकृतः सखेत्येवं मत्वा प्रसभं हठेन तिरस्कारेण यदुक्तं तत्क्षामये त्वामित्युत्तरेणान्वयः । किं तत्, हे कृष्ण, हे यादव, हे सखेति च । संधिरार्षः । प्रसभोक्तौ हेतुः—तव महिमानमिदं च विश्वरूपमजानता मया प्रमादात्प्रणयेन स्नेहेनापि वा यदुक्तमिति ॥ ४१ ॥

किंच—

**यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ।**
**एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥४२॥**

यच्चेति । हे अच्युत, यच्च परिहासार्थं क्रीडादिषु तिरस्कृतोऽसि एकः एकलः सखीन्विना रहसि स्थित इत्यर्थः । अथवा तत्समक्षं तेषां परिहसतां सखीनां समक्षं पुरतोऽपि तत्सर्वमपराधजातं त्वामप्रमेयमचिन्त्यप्रभावं क्षामये क्षमां कारयामि ॥ ४२ ॥

अचिन्त्यप्रभावमेवाह—

**पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥**

पितेति । न विद्यते प्रतिमा उपमा यस्य सोऽप्रतिमः तथाविधः प्रभावो यस्य तव हे अप्रतिमप्रभाव । त्वमस्य चराचरस्य लोकस्य पिता जनकोऽसि । अतएव पूज्यश्च, गुरुश्च, गुरोरपि गरीयान् गुरुतरः । अतो लोकत्रयेऽपि त्वत्सम एव तावदन्यो नास्ति परमेश्वरस्यान्यस्याभावात्, त्वत्तोऽभ्यधिकः पुनः कुतः स्यात् ॥ ४३ ॥

यस्मादेवम्—

**तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥४४॥**

तस्मादिति । तस्मात्त्वामीशं जगतः स्वामिनमीड्यं स्तुत्यं प्रसादये प्रसादयामि । कथम्, कायं प्रणिधाय दण्डवन्निपात्य प्रणम्य प्रकर्षेण

नत्वा । अतस्त्वं ममापराधं सोढुं क्षन्तुमर्हसि । कस्य क इव पुत्रस्यापराधं कृपया पिता यथा सहते, सख्युर्मित्रस्यापराधं सखा निरुपाधिबन्धुर्यथा, प्रियश्च प्रियाया अपराधं तत्प्रियार्थं यथा तद्वत् ॥ ४४ ॥

एवं क्षमापयित्वा प्रार्थयते—

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।**
**तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥ ४५ ॥**

अदृष्टपूर्वमिति द्वाभ्याम् । हे देव, पूर्वमदृष्टं तव रूपं दृष्ट्वा हृषितो हृष्टोऽस्मि । तथा भयेन च मे मनः प्रव्यथितं प्रचलितम् । तस्मान्मम व्यथानिवृत्तये तदेव रूपं दर्शय हे देवेश, हे जगन्निवास, प्रसन्नो भव ॥ ४५ ॥

तदेव रूपं विशेषयन्नाह—

**किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ।**
**तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥**

किरीटिनमिति । किरीटवन्तं गदावन्तं चक्रहस्तं च त्वां द्रष्टुमिच्छामि पूर्वं यथा दृष्टोऽसि तथैव । अतो हे सहस्रबाहो, हे विश्वमूर्ते, इदं विश्वरूपं संहृत्य तेनैव किरीटादियुक्तेन चतुर्भुजेन रूपेण भवाविर्भव । तदनेन श्रीकृष्णमर्जुनः पूर्वमपि किरीटादियुक्तमेव पश्यतीति गम्यते । यत्तु पूर्वमुक्तं विश्वरूपदर्शने 'किरीटिनं गदिनं चक्रिणं च पश्यामि' इति तद्बहुकिरीटाद्यभिप्रायेण । यद्वा—एतावन्तं कालं यं त्वां किरीटिनं गदिनं चक्रिणं च सुप्रसन्नमपश्यं तमेवेदानीं तेजोराशिं दुर्निरीक्ष्यं पश्यामीत्येवं तत्र वचनव्यक्तिरित्यविरोधः ॥ ४६ ॥

एवं प्रार्थितः सन् तमाश्वासयन्—

श्रीभगवानुवाच ।

**मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥**

मयेति त्रिभिः । हे अर्जुन, किमिति बिभेषि । यतो मया प्रसन्नेन कृपया तवेदं परमुत्तमं रूपं दर्शितम्, आत्मनो मम योगाद्योगमायासामर्थ्यात् । परत्वमेवाह—तेजोमयं विश्वं विश्वात्मकमनन्तमाद्यं च यन्मम रूपं त्वदन्येन त्वादृशाद्भक्तादन्येन न पूर्वं दृष्टं तत् ॥ ४७ ॥

एतद्दर्शनमतिदुर्लभं लब्ध्वा त्वं कृतार्थोऽसीत्याह—

**न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।**
**एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥**

नेति । वेदाध्ययनातिरेकेण यज्ञाध्ययनस्याभावात् यज्ञशब्देन यज्ञविद्याः कल्पसूत्राद्या लक्ष्यन्ते । वेदानां यज्ञविद्यानां चाध्ययनैरित्यर्थः । न च दानैर्न च क्रियाभिरग्निहोत्रादिभिर्न चोग्रैस्तपोभिश्चान्द्रायणादिभिरेवंरूपोऽहं त्वदन्येन मनुष्यलोके द्रष्टुं शक्यः । अपितु त्वमेव केवलं मत्प्रसादेन दृष्ट्वा कृतार्थोऽसि ॥ ४८ ॥

एवमपि चेत्तवेदं रूपं घोरं दृष्ट्वा व्यथा भवति तर्हि तदेव रूपं दर्शयामीत्याह—

**मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥४९॥**

मा त इति । ईदृगीदृशं मदीयं घोरं रूपं दृष्ट्वा ते व्यथा मास्तु । विमूढभावो विमूढत्वं च मास्तु । व्यपगतभयः प्रीतमनाश्च सन् पुनस्त्वं तदेवेदं मम रूपं प्रकर्षेण पश्य ॥ ४९ ॥

एवमुक्त्वा प्राक्तनमेव रूपं दर्शितवानिति—

संजय उवाच ।

**इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।**
**आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥५०॥**

इतीति । श्रीवासुदेवोऽर्जुनमेवमुक्त्वा यथा पूर्वमासीत्तथैव किरीटादियुक्तं चतुर्भुजं स्वीयं रूपं पुनर्दर्शयामास । एनमर्जुनं भीतमेव प्रसन्नवपुर्भूत्वा पुनरप्याश्वासितवान् । महात्मा विश्वरूपः, कृपालुरिति वा ॥ ५० ॥

ततो निर्भयः सन्—

अर्जुन उवाच ।

**दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥**

दृष्ट्वेति । सचेताः प्रसन्नचित्त इदानीं संवृत्तो जातोऽस्मि । प्रकृतिं स्वास्थ्यं च प्राप्तोऽस्मि । शेषं स्पष्टम् ॥ ५१ ॥

स्वकृतस्यानुग्रहस्यातिदुर्लभत्वं दर्शयन्—

श्रीभगवानुवाच ।

**सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥**

**सुदुर्दर्शमिति ।** यन्मम विश्वरूपं त्वं दृष्टवानसि इदं सुदुर्दर्शमत्यन्तं द्रष्टुमशक्यम् । यतो देवा अप्यस्य रूपस्य सर्वदा दर्शनमिच्छन्ति केवलं पुनरिदं पश्यन्ति ॥ ५२ ॥

तत्र हेतुः—

**नाहं वेदैर्न तपसा न दानेन न चेज्यया ।**
**शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥**

**नाहमिति ।** स्पष्टार्थः ॥ ५३ ॥

केनोपायेन तर्हि द्रष्टुं शक्य इति तत्राह—

**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥**

**भक्त्येति ।** अनन्यया मदेकनिष्ठया भक्त्या त्वेवंभूतो विश्वरूपोऽहं तत्त्वेन परमार्थतो ज्ञातुं शक्यः शास्त्रतः द्रष्टुं प्रत्यक्षतः प्रवेष्टुं च तादात्म्येन शक्यो नान्यैरुपायैः ॥ ५४ ॥

अतः सर्वशास्त्रसारं परमं रहस्यं शृण्वित्याह—

**मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नामैकादशोऽध्यायः ॥ ११ ॥

**मत्कर्मकृदिति ।** मदर्थं कर्म करोतीति मत्कर्मकृत्, अहमेव परमः पुरुषार्थो यस्य सः, ममैव भक्तो मामेवाश्रितः, पुत्रादिषु सङ्गवर्जितो निर्वैरश्च सर्वभूतेषु । एवंभूतो यः स मां प्राप्नोति नान्य इति ॥ ५५ ॥

देवैरपि सुदुर्दर्शं तपोज्ञानादिकोटिभिः ।
भक्ताय भगवानेवं विश्वरूपमदर्शयत् ॥ १ ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां विश्वरूपदर्शनयोगो नाम एकादशोऽध्यायः ॥ ११ ॥

भक्तियोगः

## द्वादशोऽध्यायः १२

निर्गुणोपासनस्यैवं सगुणोपासनस्य च ।
श्रेयः कतरदित्येवं निर्णेतुं द्वादशोद्यमः ॥ १ ॥

पूर्वाध्यायान्ते 'मत्कर्मकृन्मत्परमः' इत्येवं भक्तिनिष्ठस्य श्रेष्ठत्वमुक्तम् । 'कौन्तेय प्रतिजानीहि' इत्यादिना तत्र तत्रैव श्रेष्ठत्वं वर्णितम् ।

तथा 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इत्यादिना 'सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि' इत्यादिना च ज्ञाननिष्ठस्य श्रेष्ठत्वमुक्तम् । एवमुभयोः श्रैष्ठ्येऽपि विशेषजिज्ञासया भगवन्तं प्रति—

अर्जुन उवाच ।

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥**

**एवमिति** । एवं सर्वकर्मार्पणादिना सततं युक्तास्त्वन्निष्ठाः सन्तो ये भक्तास्त्वां विश्वरूपं सर्वज्ञं सर्वशक्तिं पर्युपासते ध्यायन्ति, ये चाप्यक्षरं ब्रह्माव्यक्तं निर्विशेषमुपासते तेषामुभयेषां मध्ये अतिशयेन के योगविदः श्रेष्ठा इत्यर्थः ॥ १ ॥

तत्र प्रथमाः श्रेष्ठा इत्युत्तरम्—

श्रीभगवानुवाच ।

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥**

**मयीति** । मयि परमेश्वरे सर्वज्ञत्वादिगुणविशिष्टे मन आवेश्यैकाग्रं कृत्वा नित्ययुक्ता मदर्थकर्मानुष्ठानादिना मन्निष्ठाः सन्तः श्रेष्ठया श्रद्धया युक्ता ये मामाराधयन्ति ते युक्ततमा मता ममाभिमताः ॥ २ ॥

तर्हि इतरे किं न श्रेष्ठा इत्यत आह—

**ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।**
**सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥**

**ये त्विति** द्वाभ्याम् । ये त्वक्षरं पर्युपासते ध्यायन्ति तेऽपि मामेव प्राप्नुवन्तीति । द्वयोरन्वयः । अक्षरस्य लक्षणमनिर्देश्यमित्यादि । अनिर्देश्यं शब्देन निर्देष्टुमशक्यम् । यतोऽव्यक्तं रूपादिहीनम् । सर्वत्रगं सर्वव्यापि । अव्यक्तत्वादेवाचिन्त्यं, कूटस्थं कूटे मायाप्रपञ्चे अधिष्ठानत्वेन स्थितम् । अचलं वृद्ध्यादिरहितम् अतएव ध्रुवं नित्यम् ॥ ३ ॥

**संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।**
**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥**

**संनियम्येति** । स्पष्टमन्यत् ॥ ४ ॥

ननु च तेऽपि त्वामेव प्राप्नुवन्ति तर्हीतरेषां युक्ततमत्वं कुत इत्यपेक्षायां क्लेशाक्लेशकृतं विशेषमाह—

नचाधिकाराद्यपेक्षानुभावि । ननु नेति नेति इत्याद्यात्म प्रति-
पादक वाक्यजनित विज्ञानेन ... पुरुषार्थोपकारः संभवति । स ... व्यापारोप
शमहेतुत्वाद् न ह्यस्य जनित विज्ञानस्य । न ह्युदासीन विज्ञानं





**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥**

क्लेश इति त्रिभिः । अव्यक्ते निर्विशेषे अक्षरे आसक्तं चेतो येषां तेषां क्लेशोऽधिकतरः । हि यस्मादव्यक्तविषया गतिर्निष्ठा देहाभिमानिभिः दुःखं यथाभवत्येवमवाप्यते । देहाभिमानिनां नित्यं प्रत्यक्प्रवणत्वस्य दुर्घटत्वादिति भावः ॥ ५ ॥

मद्भक्तानां मत्प्रसादादनायासत एव सिद्धिर्भवतीत्याह—

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥**

ये त्विति द्वाभ्याम् । मयि परमेश्वरे सर्वाणि कर्माणि संन्यस्य समर्प्य मत्परा भूत्वा मां ध्यायन्तः अनन्येन न विद्यतेऽन्यो भजनीयो यस्मिंस्तेनैव एकान्तभक्तियोगेनोपासत इत्यर्थः ॥ ६ ॥

**तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।**
**भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥**

तेषामिति । एवं मय्यावेशितं चेतो यैस्तेषां मृत्युयुक्तात्संसारसागरादहं सम्यगुद्धर्ता अचिरेणैव भवामि ॥ ७ ॥

यस्मादेवं तस्मात्—

**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।**
**निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥**

मय्येवेति । मय्येव संकल्पविकल्पात्मकं मन आधत्स्व स्थिरीकुरु । बुद्धिमपि अध्यवसायात्मिकां मय्येव निवेशय । एवं कुर्वन्मत्प्रसादेन लब्धज्ञानः सन्नत ऊर्ध्वं देहान्ते मरणानन्तरं मय्येव निवसिष्यसि निवत्स्यसि मदात्मना वासं करिष्यसि । नात्र संशयः । तथाच श्रुतिः— 'देहान्ते देवस्तारकं परब्रह्म व्याचष्टे' इति ॥ ८ ॥

अत्राशक्तं प्रति सुगमोपायमाह—

**अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।**
**अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥**

अथेति । स्थिरं यथाभवत्येवं मयि चित्तं धारयितुं यदि शक्तो न भवसि तर्हि विक्षिप्तं चित्तं पुनः पुनः प्रत्याहृत्य ममानुस्मरणलक्षणो योऽभ्यासयोगस्तेन मां प्राप्तुमिच्छ प्रयत्नं कुरु ॥ ९ ॥

नच तन्निवृत्तौ प्रत्यग्निरूपणपद्यते विरोधात् ॥

यदि पुनर्नैवं तत्राह—

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।**
**मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥**

**अभ्यास इति** । अभ्यासेऽपि यद्यशक्तोऽसि तर्हि मत्प्रीत्यर्थानि यानि कर्माण्येकादश्युपवासव्रतचर्यानामसंकीर्तनादीनि तदनुष्ठानमेव परमं यस्य तादृशो भव । एवंभूतानि कर्माण्यपि मदर्थं कुर्वन्मोक्षं प्राप्स्यसि ॥ १० ॥

अत्यन्तं भगवद्धर्मपरिनिष्ठायामशक्तस्य पक्षान्तरमाह—

**अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥**

**अथैतदपीति** । यद्येतदपि कर्तुमशक्तोऽसि तर्हि मद्योगं मदेकशरणत्वमाश्रितः सन् सर्वेषां दृष्टार्थानामावश्यकानां चाग्निहोत्रादिकर्मणां फलानि नियतचित्तो भूत्वा परित्यज । एतदुक्तं भवति—मया तावदीश्वराज्ञया यथाशक्ति कर्माणि कर्तव्यानि, फलं पुनर्दृष्टमदृष्टं वा परमेश्वराधीनमित्येवं मयि भारमारोप्य फलासक्तिं परित्यज्य वर्तमानो मत्प्रसादेन कृतार्थो भविष्यसीति तात्पर्यम् ॥ ११ ॥

तमिमं फलत्यागं स्तौति—

**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥**

**श्रेयो हीति** । सम्यग्ज्ञानरहितादभ्यासाद्युक्तिसहितोपदेशपूर्वकं ज्ञानं श्रेष्ठम् । तस्मादपि तत्पूर्वकं ध्यानं विशिष्टम् । 'ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति श्रुतेः । तस्मादप्युक्तलक्षणः कर्मफलत्यागः श्रेष्ठः । तस्मादेवंभूतात्कर्मफलत्यागात्कर्मसु तत्फलेषु चासक्तिनिवृत्त्या मत्प्रसादेन च समनन्तरमेव संसारशान्तिर्भवति ॥ १२ ॥

एवंभूतस्य भक्तस्य क्षिप्रमेव परमेश्वरप्रसादहेतून्धर्मानाह—

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।**
**निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥**

**अद्वेष्टेत्यष्टभिः** । सर्वभूतानां यथायथमद्वेष्टा मैत्रः करुणश्च, उत्तमेषु द्वेषशून्यः, समेषु मित्रतया वर्तत इति मैत्रः, हीनेषु कृपालुरित्यर्थः । निर्ममो निरहंकारश्च । कृपालुत्वादेवान्यैः सह समे दुःखसुखे यस्य सः । क्षमी क्षमावान् ॥ १३ ॥

संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥

संतुष्ट इति । सततं लाभेऽलाभे च संतुष्टः प्रसन्नचित्तः योग्यप्रमत्तः । यतात्मा संयतस्वभावः । दृढो मद्विषयो निश्चयो यस्य मय्यर्पिते मनोबुद्धी येन, एवंभूतो यो मद्भक्तः स मे प्रियः ॥ १४ ॥

किंच—

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥

यस्मादिति । यस्मात्सकाशाल्लोको जनो नोद्विजते भयशङ्कया संक्षोभं न प्राप्नोति, यश्च लोकान्नोद्विजते । यश्च स्वाभाविकैर्हर्षादिभिर्मुक्तः । तत्र हर्षः स्वस्येष्टार्थलाभे उत्साहः । अमर्षः परस्य लाभेऽसहनम् । भयं त्रासः । उद्वेगो भयादिनिमित्तचित्तक्षोभः । एतैर्विमुक्तो यो मद्भक्तः स च मे प्रियः ॥ १५ ॥

किंच—

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥

अनपेक्ष इति । अनपेक्षो यदृच्छोपस्थितेऽप्यर्थे निःस्पृहः । शुचिर्बाह्याभ्यन्तरशौचसंपन्नः । दक्षोऽनलसः । उदासीनः पक्षपातरहितः । गतव्यथ आधिशून्यः । सर्वान्दृष्टादृष्टार्थानारम्भानुद्यमान्परित्यक्तुं शीलं यस्य सः । एवंभूतः सन् यो मद्भक्तः स मे प्रियः ॥ १६ ॥

किंच—

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥ १७ ॥

यो नेति । प्रियं प्राप्य यो न हृष्यति, अप्रियं प्राप्य यो न द्वेष्टि, इष्टार्थनाशे सति यो न शोचति, अप्राप्तमर्थं यो न काङ्क्षति । शुभाशुभे पुण्यपापे परित्यक्तुं शीलं यस्य सः । एवंभूतो भूत्वा यो मद्भक्तिमान्स मे प्रियः ॥ १७ ॥

किंच—

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥

सम इति । शत्रौ च मित्रे च सम एकरूपः । मानापमानयोरपि

तथा सम एव हर्षविषादशून्य इत्यर्थः । शीतोष्णयोः सुखदुःखयोश्च समः । सङ्गविवर्जितः क्वचिदप्यनासक्तः ॥ १८ ॥

**तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येनकेनचित् ।**
**अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥**

तुल्य इति । तुल्ये निन्दास्तुती यस्य, मौनी संयतवाक् । येनकेनचिद्यथालब्धेन संतुष्टः । अनिकेतो नियतवासशून्यः । स्थिरमतिर्व्यवस्थितचित्तः । एवंभूतो मद्भक्तिमान् यः स मे प्रियो नरः ॥ १९ ॥

उक्तं धर्मजातं सफलमुपसंहरति—

**ये तु धर्मामृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

ये त्विति । यथोक्तमुक्तप्रकारं धर्म एवामृतममृतत्वसाधनत्वात् । धर्म्यामृतमिदमिति केचित्पठन्ति । तद्य उपासतेऽनुतिष्ठन्ति श्रद्धां कुर्वन्तो मत्परमाश्च सन्तो मद्भक्तास्तेऽतीव मे प्रिया इति ॥ २० ॥

दुःखमव्यक्तवर्त्मैतद्बहुविघ्नमतो बुधः ।
सुखं कृष्णपदाम्भोजभक्तिसत्पथमाभजेत् ॥ १ ॥

इति श्रीधरस्वामिविर० सुबोधिन्यां टीकायां भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः १३

भक्तानामहमुद्धर्ता संसारादित्यवादि यत् ।
त्रयोदशेऽथ तत्सिद्ध्यै तत्त्वज्ञानमुदीर्यते ॥ १ ॥

'तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि' इति पूर्वं प्रतिज्ञातं तन्न चात्मज्ञानं विना संसारादुद्धरणं संभवतीति तत्त्वज्ञानोपदेशार्थं प्रकृतिपुरुषविवेकाध्याय आरभ्यते । तत्र यत्सप्तमेऽध्याये अपरा परा चेति प्रकृतिद्वयमुक्तं तयोरविवेकाज्जीवभावमापन्नस्य चिदंशस्यायं संसारः । याभ्यां च जीवोपभोगार्थमीश्वरः सृष्ट्यादिषु प्रवर्तते तदेव प्रकृतिद्वयमुक्तं क्षेत्रक्षेत्रज्ञशब्दवाच्यं परस्परं विविक्तं तत्त्वतो निरूपयिष्यन्—

श्रीभगवानुवाच ।

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥**

श्री० भ० १२

नहि मशानीयेषु वाघ्रादिषु हीनयोनिषु वा जातिमानिकेषु मनुष्येषु [illegible]





इदमिति। इदं भोगायतनं शरीरं क्षेत्रमित्यभिधीयते संसारस्य प्ररोहभूमित्वात्। एतद्यो वेत्ति अहं ममेति मन्यते तं क्षेत्रज्ञ इति प्राहुः कृषीवलवत्तत्फलभोक्तृत्वात् तद्विदः क्षेत्रक्षेत्रज्ञयोर्विवेकज्ञाः ॥ १ ॥

तदेवं संसारिणः स्वरूपमुक्तम्। इदानीं तस्यैव पारमार्थिकमसंसारिस्वरूपमाह—

**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥**

क्षेत्रज्ञमिति। तं च क्षेत्रज्ञं संसारिणं वस्तुतः सर्वक्षेत्रेष्वनुगतं मामेव विद्धि 'तत्त्वमसि' इति श्रुत्युपलक्षितेन चिदंशेन मद्रूपस्योक्तत्वात्। आदरार्थमेव तज्ज्ञानं स्तौति—क्षेत्रक्षेत्रज्ञयोर्यदेवं वैलक्षण्येन ज्ञानं तदेव मोक्षहेतुत्वान्मम ज्ञानं मतम्। अन्यत्तु वृथा पाण्डित्यम्। बन्धहेतुत्वादित्यर्थः। तदुक्तं—'तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये। आयासायापरं कर्म विद्यान्या शिल्पनैपुणम्' इति ॥ २ ॥

अत्र यद्यपि चतुर्विंशतिभेदैर्भिन्ना प्रकृतिः क्षेत्रमित्यभिप्रेतं तथापि देहरूपेण परिणतायामेव तस्यामहंभावेनाविवेकः स्फुट इति तद्विवेकार्थमिदं शरीरं क्षेत्रमित्याद्युक्तम्। तदेतत्प्रपञ्चयिष्यन्प्रतिजानीते—

**तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत्।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥**

तत्क्षेत्रमिति। यदुक्तं मया क्षेत्रं तच्च क्षेत्रं, यत्स्वरूपतो जडं दृश्यादिस्वभावं, यादृग्यादृशं चेच्छादिधर्मकं, यद्विकारि यैरिन्द्रियादिविकारैर्युक्तं, यतश्च प्रकृतिपुरुषसंयोगाद्भवति, यदिति यैः स्थावरजङ्गमादिभेदैर्भिन्नमित्यर्थः। स च क्षेत्रज्ञो, यः स्वरूपतो यत्प्रभावश्च अचिन्त्यैश्वर्ययोगेन यैः प्रभावैः संपन्नः तत्सर्वं संक्षेपतो मत्तः शृणु ॥ ३ ॥

कैर्विस्तरेणोक्तस्यायं संक्षेप इत्यपेक्षायामाह—

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥**

ऋषिभिरिति। ऋषिभिर्वसिष्ठादिभिर्योगशास्त्रेषु ध्यानधारणादिविषयत्वेन वैराजादिरूपेण बहुधा गीतं निरूपितम्। विविधैर्विचित्रैश्च नित्यनैमित्तिककाम्यविषयैश्छन्दोभिर्वेदैर्नानायजनीयदेवतादिरूपेण बहुधा गीतम्। ब्रह्मणः सूत्रैः पदैश्च, ब्रह्म सूत्र्यते सूच्यत एभिरिति ब्रह्मसूत्राणि 'यतो

वा इमानि भूतानि जायन्ते' इत्यादीनि तटस्थलक्षणपराण्युपनिषद्वाक्यानि, तथाच ब्रह्म पद्यते गम्यते साक्षाज्ज्ञायत एभिरिति पदानि स्वरूपलक्षणपराणि 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादीनि तैश्च बहुधा गीतम् । किंच हेतुमद्भिः 'सदेव सोम्येदमग्र आसीत्' 'कथमसतः सज्जायेत' इति, तथा 'को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति' इत्यादियुक्तिमद्भिः, अन्यादपानचेष्टां कः कुर्यात्, प्राण्यात्प्राणानां व्यापारं को वा कुर्यात् इति श्रुतिपदयोरर्थः । विनिश्चितैरुपक्रमोपसंहारैकवाक्यतया असंदिग्धार्थप्रतिपादकैरित्यर्थः । तदेवमेतैर्विस्तरेणोक्तं दुःसंग्रहं संक्षेपतस्तुभ्यं कथयिष्यामि तच्छृण्वित्यर्थः । यद्वा 'अथातो ब्रह्मजिज्ञासा' इत्यादीनि ब्रह्मसूत्राणि गृह्यन्ते, तान्येव ब्रह्म पद्यते निश्चीयत एभिरिति पदानि, तैर्हेतुमद्भिः 'ईक्षतेर्नाशब्दम्', 'आनन्दमयोऽभ्यासात्' इत्यादिभिर्युक्तिमद्भिर्विनिश्चितार्थैः । शेषं समानम् ॥ ४ ॥

तत्र क्षेत्रस्वरूपमाह—

**महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥**

**महाभूतानीति** द्वाभ्याम् । महाभूतानि भूम्यादीनि पञ्च । अहंकारस्तत्कारणभूतः । बुद्धिर्विज्ञानात्मकं महत्तत्त्वम् । अव्यक्तं मूलप्रकृतिः । इन्द्रियाणि बाह्यानि दश श्रोत्रत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायव इति । एकं च मनः । इन्द्रियगोचराश्च पञ्चतन्मात्ररूपा एव शब्दादय आकाशादिविशेषगुणतया व्यक्ताः सन्त इन्द्रियविषयाः पञ्च । तदेवं चतुर्विंशतितत्त्वान्युक्तानि ॥ ५ ॥

**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥**

**इच्छेति** । इच्छादयः प्रसिद्धाः । संघातः शरीरम् । चेतना ज्ञानात्मिका मनोवृत्तिः । धृतिर्धैर्यम् । एत इच्छादयो दृश्यत्वान्नात्मधर्मा अपितु मनोधर्मा एव । अतः क्षेत्रान्तःपातिन एव । उपलक्षणं चैतत्संकल्पादीनाम् । तथाच श्रुतिः—'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति । अनेन च यादृगिति प्रतिज्ञाताः क्षेत्रधर्मा दर्शिताः । एतत्क्षेत्रं सविकारमिन्द्रियादिविकारसहितं संक्षेपेण तुभ्यं मयोक्तमिति क्षेत्रोपसंहारः ॥ ६ ॥

इदानीमुक्तलक्षणात्क्षेत्राद्विविक्ततया ज्ञेयं शुद्धं क्षेत्रज्ञं विस्तरेण वर्णयिष्यंस्तज्ज्ञानसाधनान्याह—

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥**

**अमानित्वमिति** पञ्चभिः । अमानित्वं स्वगुणश्लाघाराहित्यम् । अदम्भित्वं दम्भराहित्यम् । अहिंसा परपीडावर्जनम् । क्षान्तिः सहिष्णुत्वम् । आर्जवमवक्रता । आचार्योपासनं सद्गुरुसेवा । शौचं बाह्यमाभ्यन्तरं च । तत्र बाह्यं मृज्जलादिना । आभ्यन्तरं च रागादिमलक्षालनम् । तथाच स्मृतिः—'शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥' इति । स्थैर्यं सन्मार्गे प्रवृत्तस्य तदेकनिष्ठता । आत्मविनिग्रहः शरीरसंयमः । एतज्ज्ञानमिति प्रोक्तमिति पञ्चमेनान्वयः ॥ ७ ॥

किंच—

**इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥**

**इन्द्रियार्थेष्विति** । जन्मादिषु दुःखदोषयोरनुदर्शनं पुनःपुनरालोचनम् । दुःखरूपस्य दोषस्यानुदर्शनमिति वा । स्पष्टमन्यत् ॥ ८ ॥

किंच—

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥**

**असक्तिरिति** । असक्तिः पुत्रादिपदार्थेषु प्रीतित्यागः । अनभिष्वङ्गः पुत्रादीनां सुखे दुःखे चाऽहमेव सुखी दुःखी चेत्यध्यासातिरेकाभावः । इष्टानिष्टयोरुपपत्तिषु प्राप्तिषु नित्यं सर्वदा समचित्तत्वम् ॥ ९ ॥

किंच—

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥**

**मयि चेति** । मयि परमेश्वरे अनन्ययोगेन सर्वात्मदृष्ट्या अव्यभिचारिणी एकान्तभक्तिः । विविक्तः शुद्धचित्तप्रसादकरः । तं देशं सेवितुं शीलं यस्य तस्य भावस्तत्वम् । प्राकृतानां जनानां संसदि सभायामरतीरत्यभावः ॥ १० ॥

**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥**

**अध्यात्मेति** । आत्मानमधिकृत्य वर्तमानं ज्ञानमध्यात्मज्ञानम् तस्मिन्नित्यत्वं नित्यभावः तत्त्वंपदार्थशुद्धिनिष्ठत्वमित्यर्थः । तत्त्वज्ञानस्यार्थः प्रयोजनं मोक्षः तस्य दर्शनं मोक्षस्य सर्वोत्कृष्टतालोचनमित्यर्थः । एतदमानित्वमदम्भित्वमित्यादिविंशतिसंख्याकं यदुक्तमेतज्ज्ञानमिति प्रोक्तं, ज्ञानसाधनत्वात् । अतोऽन्यथाऽस्माद्विपरीतं मानित्वादि यदेतदज्ञानमिति प्रोक्तं वसिष्ठादिभिः, ज्ञानविरोधित्वात् । अतः सर्वथा त्याज्यमित्यर्थः ॥ ११ ॥

एभिः साधनैर्यज्ज्ञेयं तदाह—

**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥**

**ज्ञेयमिति** षड्भिः । यज्ज्ञेयं तत्प्रवक्ष्यामि । श्रोतुरादरसिद्धये ज्ञानफलं दर्शयति—यद्वक्ष्यमाणं ज्ञात्वाऽमृतं मोक्षं प्राप्नोति । किं तत्, अनादिमत् । आदिमन्न भवतीत्यनादिमत् । परं निरतिशयं ब्रह्म । अनादीत्येतावतैव बहुव्रीहिणा अनादित्वे सिद्धेऽपि पुनर्मतुपः प्रयोग श्छान्दसः । यद्वा—अनादीति मत्परमिति च पदद्वयं मम विष्णोः परं निर्विशेषं रूपं ब्रह्मेत्यर्थः । तदेवाह न सन्न चासदुच्यते । विधिमुखेन प्रमाणस्य विषयः सच्छब्देनोच्यते । निषेधस्य विषयस्त्वसच्छब्देनोच्यते । इदं तु तदुभयविलक्षणं, अविषयत्वादित्यर्थः ॥ १२ ॥

नन्वेवं ब्रह्मणः सदसद्विलक्षणत्वे सति 'सर्वं खल्विदं ब्रह्म' 'ब्रह्मैवेदं सर्वम्' इत्यादिश्रुतिभिर्विरुध्येतेत्याशङ्क्य 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिश्रुतिप्रसिद्धयाऽचिन्त्यशक्त्या सर्वात्मतां तस्य दर्शयन्नाह—

**सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥**

**सर्वत इति** पञ्चभिः । सर्वतः सर्वत्र पाणयः पादाश्च यस्य तत्, सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत्, सर्वतः श्रुतिमच्छ्रवणेन्द्रियैर्युक्तं सल्लोके सर्वमावृत्य व्याप्य तिष्ठति । सर्वप्राणिप्रवृत्तिभिः पाण्यादिभिरुपाधिभिः सर्वव्यवहारास्पदत्वेन तिष्ठतीत्यर्थः ॥ १३ ॥

किंच—

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥

सर्वेन्द्रियेति । सर्वेषां चक्षुरादीनामिन्द्रियाणां गुणेषु रूपाद्याकारासु वृत्तिषु तत्तदाकारेण भासत इति तथा, सर्वाणीन्द्रियाणि गुणांश्च तत्तद्विषयानाभासयतीति वा । सर्वेन्द्रियैर्विवर्जितं च । तथाच श्रुतिः- 'अपाणिपादो जवनोऽग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादि। असक्तं सङ्गशून्यम् । तथापि सर्वं बिभर्तीति सर्वभृत्सर्वस्याधारभूतम्। तदेव निर्गुणं सत्त्वादिगुणरहितम् । गुणभोक्तृ गुणानां सत्त्वादीनां भोक्तृ च पालकम् ॥ १४ ॥

किंच—

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥

बहिरिति । भूतानां चराचराणां स्वकार्याणां बहिश्चान्तश्च तदेव सुवर्णमिव कटककुण्डलादीनाम्, जलतरङ्गाणामन्तर्बहिश्च जलमिव। अचरं स्थावरं चरं जङ्गमं भूतजातं तदेव कारणात्मकत्वात्कार्यस्य। एवमपि सूक्ष्मत्वाद्रूपादिहीनत्वात्तदविज्ञेयमिदं तदिति स्पष्टज्ञानार्हं न भवति । अतएवाविदुषां योजनलक्षान्तरितमिव दूरस्थं च । सविकारायाः प्रकृतेः परत्वात् । विदुषां पुनः प्रत्यगात्मत्वादन्तिके च तन्निलं संनिहितम्। तथाच मन्त्रः—'तदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः' इति । एजति चलति, नैजति न चलति, तद् उ अन्तिके इति च्छेदः ॥ १५ ॥

किंच—

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥

अविभक्तमिति । भूतेषु स्थावरजङ्गमात्मकेषु अविभक्तं कारणात्मना अभिन्नं, कार्यात्मना विभक्तं भिन्नमिवावस्थितं च । तत्पूर्वोक्तं ज्ञेयम्। भूतानां भर्तृ च पोषकं स्थितिकाले । प्रलयकाले च ग्रसिष्णु ग्रसनशीलम्। सृष्टिकाले च प्रभविष्णु नानाकार्यात्मना प्रभवनशीलम् ॥ १६ ॥

किंच—

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥

ज्योतिषामिति । ज्योतिषां चन्द्रादित्यादीनामपि तज्ज्योतिः प्रकाशकं तत् । 'येन सूर्यस्तपति तेजसेद्धः' 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इत्यादिश्रुतेः । अतएव तमसोऽज्ञानात्परं तेनासंस्पृष्टमुच्यते । 'आदित्यवर्णं तमसः परस्तात्' इत्यादिश्रुतेः । ज्ञानं च तदेव बुद्धिवृत्तावभिव्यक्तम् । तदेव रूपाद्याकारेण ज्ञेयं च, ज्ञानेन गम्यं च 'अमानित्वमदम्भित्वम्' इत्यादिलक्षणेन पूर्वोक्तेन ज्ञानसाधनेन प्राप्यमित्यर्थः । ज्ञानगम्यं विशिनष्टि सर्वस्य प्राणिमात्रस्य हृदि विष्ठितं विशेषेणाप्रच्युतस्वरूपेण नियन्तृतया स्थितम् । धिष्ठितमिति पाठेऽधिष्ठाय स्थितमित्यर्थः ॥ १७ ॥

उक्तं क्षेत्रादिकमधिकारिफलसहितमुपसंहरति—

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥

इतीति । इत्येवं क्षेत्रं महाभूतादिधृत्यन्तं तथा ज्ञानं च अमानित्वादितत्त्वज्ञानार्थदर्शनान्तं ज्ञेयं च 'अनादिमत्परं ब्रह्म' इत्यादि 'विष्ठितम्' इत्यन्तम् । वसिष्ठादिभिर्विस्तरेणोक्तं सर्वमपि मया संक्षेपेणोक्तम् । एतच्च पूर्वाध्यायोक्तलक्षणो मद्भक्तो विज्ञाय मद्भावाय ब्रह्मत्वायोपपद्यते योग्यो भवति ॥ १८ ॥

तदेवं 'तत्क्षेत्रं यच्च यादृक्च' इत्येतावत्प्रपञ्चितम् । इदानीं तु 'यद्विकारि यतश्च यत् । स च यो यत्प्रभावश्च' इत्येतत्पूर्वं प्रतिज्ञातमेव प्रकृतिपुरुषयोः संसारहेतुत्वकथनेन प्रपञ्चयति—

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥

प्रकृतिमिति पञ्चभिः । तत्र प्रकृतिपुरुषयोरादिमत्त्वे तयोरपि प्रकृत्यन्तरेण भाव्यमित्यनवस्थापत्तिः स्यात् । अतस्तावुभावनादी विद्धि । अनादेरीश्वरस्य शक्तित्वात्प्रकृतिरनादिः । पुरुषोऽपि तदंशत्वादनादिरेव । अत्र च परमेश्वरस्य तच्छक्तीनां चानादित्वं नित्यत्वं च श्रीमच्छंकरभगवद्भाष्यकृद्भिरतिप्रबन्धेनोपपादितमिति नास्माभिः प्रतन्यते । विका-

रांश्च देहेन्द्रियादीन्, गुणांश्च गुणपरिणामान्सुखदुःखमोहादीन्प्रकृतेः संभवान्संभूतान्विद्धि ॥ १९ ॥

विकाराणां प्रकृतिसंभवत्वं दर्शयन्पुरुषस्य संसारहेतुत्वं दर्शयति—

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥**

**कार्यकारणेति** । कार्यं शरीरम् कारणानि सुखदुःखादिसाधनानीन्द्रियाणि तेषां कर्तृत्वे तदाकारपरिणामे प्रकृतिर्हेतुरुच्यते कपिलादिभिः। पुरुषो जीवस्तत्कृतसुखदुःखानां भोक्तृत्वे हेतुरुच्यते । अयं भावः—यद्यप्यचेतनायाः प्रकृतेः स्वतः कर्तृत्वं न संभवति तथा पुरुषस्याप्यविकारिणो भोक्तृत्वं न संभवति, तथापि कर्तृत्वं नाम क्रियानिर्वर्तकत्वम्। तत्त्वचेतनस्यापि चेतनादृष्टवशात्संभवति। यथा वह्नेरूर्ध्वज्वलनम्, वायोस्तिर्यग्गमनम्, वत्सादृष्टवशात्स्तन्यपयसः क्षरणमित्यादि । अतः पुरुषसंनिधानात्प्रकृतेः कर्तृत्वमुच्यते । भोक्तृत्वं च सुखदुःखसंवेदनम्। तच्चेतनधर्म एवेति प्रकृतिसंनिधानात्पुरुषस्य भोक्तृत्वमुच्यत इति ॥ २० ॥

तथाप्यविकारिणो जन्मरहितस्य भोक्तृत्वं कथमित्यत आह—

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥**

**पुरुष इति** । हि यस्मात्प्रकृतिस्थः तत्कार्यदेहे तादात्म्येन स्थितः पुरुषः अतस्तज्जनितान्सुखादीन्भुङ्क्ते । अस्य च पुरुषस्य सतीषु देवादियोनिषु, असतीषु तिर्यगादियोनिषु यानि यानि जन्मानि तेषु गुणसङ्गः गुणैः शुभाशुभकर्मकारिभिरिन्द्रियैः सङ्गः कारणमित्यर्थः ॥ २१ ॥

तदनेन प्रकारेण प्रकृत्यविवेकात्पुरुषस्य संसारो नतु स्वरूपत इत्याशयेन तस्य स्वरूपमाह—

**उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २२ ॥**

**उपद्रष्टेति** । अस्मिन्प्रकृतिकार्ये देहे च वर्तमानोऽपि पुरुषः परो भिन्न एव न तद्गुणैर्युज्यत इत्यर्थः । तत्र हेतवः—यस्मादुपद्रष्टा पृथग्भूत एव समीपे स्थित्वा द्रष्टा साक्षीत्यर्थः । तथाऽनुमन्ता अनुमोदितेव संनिधिमात्रेणानुग्राहकः । 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुतेः । तथा ऐश्वरेण रूपेण भर्ता विधारक इति चोक्तः, भोक्ता पालक इति च, महांश्चासावीश्वरश्च स, ब्रह्मादीनामधिपतिरिति च परमात्मान्तर्यामीति चोक्त

श्रुत्या । तथा च श्रुतिः—'एष भूताधिपतिरेष लोकेश्वर एष लोकपालः' इत्यादिः ॥ २२ ॥

एवं प्रकृतिपुरुषविवेकज्ञानिनं स्तौति—

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥**

**य एवमिति ।** एवमुपद्रष्टृत्वादिरूपेण पुरुषं यो वेत्ति । प्रकृतिं च गुणैः सुखदुःखादिपरिणामैः सहितां यो वेत्ति स पुरुषः सर्वथा विधिमतिलङ्घ्येह वर्तमानोऽपि पुनर्नाभिजायते मुच्यत एवेत्यर्थः ॥ २३ ॥

एवंभूतविविक्तात्मज्ञाने साधनविकल्पानाह—

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।**
**अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥**

**ध्यानेनेति द्वाभ्याम् ।** ध्यानेन आत्माकारप्रत्ययावृत्त्या आत्मनि देहे आत्मना मनसा एनमात्मानं केचित्पश्यन्ति । अन्ये तु सांख्येन प्रकृतिपुरुषवैलक्षण्यालोचनेन, योगेनाष्टाङ्गेनापरे, अपरे च कर्मयोगेन पश्यन्तीति सर्वत्रानुषङ्गः । एतेषां च ध्यानादीनां यथायोग्यं क्रमसमुच्चये सत्यपि तत्तन्निष्ठाभेदाभिप्रायेण विकल्पोक्तिः ॥ २४ ॥

अतिमन्दाधिकारिणां निस्तारोपायमाह—

**अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥**

**अन्य इति ।** अन्ये तु सांख्ययोगादिमार्गेणैवंभूतमुपद्रष्टृत्वादिलक्षणमात्मानं साक्षात्कर्तुमजानन्तोऽन्येभ्य आचार्येभ्य उपदेशेन श्रुत्वा उपासते ध्यायन्ति । ते च श्रद्धयोपदेशश्रवणपरायणाः सन्तो मृत्युं संसारं शनैरतितरन्त्येव ॥ २५ ॥

तत्र कर्मयोगस्य तृतीयचतुर्थपञ्चमेषु प्रपञ्चितत्वात् ध्यानस्य योगस्य च षष्ठाष्टमयोः प्रपञ्चितत्वात् ध्यानादेश्च सांख्यविविक्तात्मविषयत्वात्सांख्यमेव प्रपञ्चयन्नाह—

**यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् ।**
**क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६ ॥**

**यावदित्यादि** यावदध्यायसमाप्ति । यावत्किंचिद्वस्तुमात्रं सत्त्वमुत्पद्यते तत्सर्वं क्षेत्रक्षेत्रज्ञयोर्योगात्, अविवेककृतात्तादात्म्याध्यासाद्भवतीति जानीहि ॥ २६ ॥

अविवेककृतं संसारोद्भवमुक्त्वा तन्निवृत्तये विविक्तात्मविषयं सम्यग्दर्शनमाह—

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥**

**सममिति** । स्थावरजङ्गमात्मकेषु भूतेषु निर्विशेषं सद्रूपेण समं यथा भवत्येवं तिष्ठन्तं परमात्मानं यः पश्यति अतएव तेषु विनश्यत्स्वप्यविनश्यन्तं यः पश्यति स एव सम्यक्पश्यति नान्यः ॥ २७ ॥

कुत इत्यत आह—

**समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८ ॥**

**सममिति** । सर्वत्र भूतमात्रे समं सम्यगप्रच्युतरूपेणावस्थितं परमात्मानं पश्यन् हि यस्मादात्मना स्वेनैवात्मानं न हिनस्ति अविद्यया सच्चिदानन्दरूपमात्मानं तिरस्कृत्य न विनाशयति । ततश्च परां गतिं मोक्षं प्राप्नोति । यस्त्वेवं न पश्यति स हि देहात्मदर्शी देहेन सहात्मानं हिनस्ति । तथाच श्रुतिः—'असुर्या नाम ते लोका अन्धेन तमसावृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' इति ॥ २८ ॥

ननु शुभाशुभकर्मकर्तृत्वेन वैषम्ये दृश्यमाने कथमात्मनः समत्वमित्याशङ्क्याह—

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९ ॥**

**प्रकृत्यैवेति** । प्रकृत्यैव देहेन्द्रियाकारेण परिणतया सर्वशः सर्वैः प्रकारैः क्रियमाणानि कर्माणि यः पश्यति तथात्मानं चाकर्तारं देहाभिमानेनैवात्मनः कर्तृत्वं न स्वतः इत्येवं यः पश्यति स एव सम्यक्पश्यति नान्य इत्यर्थः ॥ २९ ॥

इदानीं तु भूतानां प्रकृतितावन्मात्रत्वेनाभेदाद्भूतभेदकृतमप्यात्मनो भेदमपश्यन् ब्रह्मत्वमुपैतीत्याह—

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥**

**यदेति** । यदा भूतानां स्थावरजङ्गमानां पृथग्भावं भेदं पृथक्त्वं एकस्थमेकस्यामेवेश्वरशक्तिरूपायां प्रकृतौ स्थितं प्रलयेऽनुपश्यत्यालोचयति । तत एव च तस्या एव प्रकृतेः सकाशाद्भूतानां विस्तारं सृष्टिसमयेऽनुपश्यति

तदा प्रकृतितावन्मात्रत्वेन भूतानामप्यभेदं पश्यन्परिपूर्णं ब्रह्म संपद्यते । ब्रह्मैव भवतीत्यर्थः ॥ ३० ॥

तथापि परमेश्वरस्य संसारावस्थायां देहसंबन्धनिमित्तैः कर्मभिस्तत्फलैश्च सुखदुःखादिभिर्वैषम्यं दुष्परिहरमिति कुतः समदर्शनं तत्राह—

**अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥**

अनादित्वादिति । यदुत्पत्तिमत्तदेव हि व्येति विनाशमेति । यच्च गुणवद्वस्तु, तस्य गुणनाशे व्ययो भवति । अयं तु परमात्मा अनादिर्निर्गुणश्चातोऽव्ययः । अविकारीत्यर्थः । तस्माच्छरीरे स्थितोऽपि किंचिन्न करोति न च कर्मफलैर्लिप्यते ॥ ३१ ॥

तत्र दृष्टान्तमाह—

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥**

यथेति । यथा सर्वत्र पङ्कादिष्वपि स्थितमाकाशं सौक्ष्म्यादसङ्गत्वात्पङ्कादिभिर्नोपलिप्यते तथा सर्वत्र उत्तमे मध्यमेऽधमे वा देहेऽवस्थितोऽप्यात्मा नोपलिप्यते दैहिकैर्गुणदोषैर्न युज्यत इत्यर्थः ॥ ३२ ॥

असङ्गत्वाल्लेपो नास्तीत्याकाशदृष्टान्तेनोक्तम्, प्रकाशकत्वाच्च प्रकाश्यधर्मैर्न युज्यत इति रविदृष्टान्तेनाह—

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥**

यथेति । स्पष्टार्थः ॥ ३३ ॥

अध्यायार्थमुपसंहरति—

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे प्रकृतिपुरुषविवेकयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

क्षेत्रक्षेत्रज्ञयोरिति । एवमुक्तप्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं भेदं विवेकज्ञानलक्षणेन चक्षुषा ये विदुः । तथा चेयमुक्ता भूतानां प्रकृतिस्तस्याः सकाशान्मोक्षं मोक्षोपायं ध्यानादिकं च ये विदुस्ते परं पदं यान्ति ॥ ३४ ॥

विविक्तौ येन तत्त्वेन मिश्रौ प्रकृतिपूरुषौ ।
तं वन्दे परमानन्दं नन्दनन्दनमीश्वरम् ॥ १ ॥

इति श्रीधरस्वामिविर० सुबोधिन्यां टीकायां प्रकृतिपुरुषविवेकयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

# चतुर्दशोऽध्यायः १४

पुंप्रकृत्योः स्वतन्त्रत्वं वारयन् गुणसङ्गतः ।
प्राह संसारवैचित्र्यं विस्तरेण चतुर्दशे ॥ १ ॥

'यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ' इत्युक्तम् । स च क्षेत्रक्षेत्रज्ञयोः संयोगो निरीश्वरसांख्यानामिव न स्वातन्त्र्येण किं त्वीश्वरेच्छयैवेति कथनपूर्वकं 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इत्यनेनोक्तं सत्त्वादिगुणकृतं संसारवैचित्र्यं प्रपञ्चयिष्यन्नेवंभूतं वक्ष्यमाणमर्थं स्तौति—

श्रीभगवानुवाच ।

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**

**परं भूय इति** द्वाभ्याम् । परं परमार्थनिष्ठं, ज्ञायतेऽनेनेति ज्ञानमुपदेशं भूयोऽपि तुभ्यं प्रकर्षेण वक्ष्यामि । कथंभूतम् । ज्ञानानां तपःकर्मादिविषयाणां मध्ये उत्तमम्, मोक्षहेतुत्वात् । तदेवाह—यज्ज्ञात्वा प्राप्य मुनयो मननशीलाः सर्वे इतो देहबन्धनात्परां सिद्धिं मोक्षं गताः प्राप्ताः ॥ १ ॥

किंच—

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥**

**इदमिति ।** इदं वक्ष्यमाणं ज्ञानमुपाश्रित्य इदं ज्ञानसाधनमनुष्ठाय मम साधर्म्यं मद्रूपत्वं प्राप्ताः सन्तः सर्गेऽपि ब्रह्मादिषूत्पद्यमानेष्वपि नोत्पद्यन्ते । तथा प्रलयेऽपि न व्यथन्ति प्रलयदुःखानि नानुभवन्ति पुनर्नावर्तन्त इत्यर्थः ॥ २ ॥

तदेवं प्रशंसया श्रोतारमभिमुखीकृत्य परमेश्वराधीनयोः प्रकृतिपुरुषयोः सर्वभूतोत्पत्तिं प्रति हेतुत्वं नतु स्वतन्त्रयोरितीमं विवक्षितमर्थं कथयति—

**मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।**
**संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥**

**ममेति ।** देशतः कालतश्चानवच्छिन्नत्वान्महत्, बृंहणत्वात्स्वकार्याणां वृद्धिहेतुत्वाद्वा ब्रह्म प्रकृतिरित्यर्थः । तन्महद्ब्रह्म मम परमेश्वरस्य योनिर्गर्भाधानस्थानम् । तस्मिन्नहं गर्भं जगद्विस्तारहेतुं चिदाभासं दधामि

साध्येषु च सर्वेष्वपि कर्मसु हिंसादेः संभवात्सर्वमपि कर्म त्याज्यमेवेति। तदुक्तम्—'दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः' इति। अस्यार्थः—उपायो ज्योतिष्टोमादिः सोऽपि दृष्टोपायवद्गुरुपाठादनुश्रूयत इत्यनुश्रवो वेदस्तद्बोधितः तत्राविशुद्धिर्हिंसा तया क्षयो विनाशः अग्निहोत्रज्योतिष्टोमादिजन्यस्वर्गेषु तारतम्यं च वर्तते परोत्कर्षस्तु सर्वान्दुःखीकरोति। अपरे तु मीमांसका यज्ञादिकं कर्म न त्याज्यमिति प्राहुः। अयं भावः—क्रत्वर्थापि सतीयं हिंसा पुरुषेणैव कर्तव्या। सा चान्योद्देशेनापि कृता पुरुषस्य प्रत्यवायहेतुरेव। तथाहि विधिर्विधेयस्य तदुद्देशेनानुष्ठानं विधत्ते तादर्थ्यलक्षणत्वाच्छेषत्वस्य। नत्वेवं निषेधो निषेध्यस्य तादर्थ्यमपेक्षते, प्राप्तिमात्रोपेक्षितत्वात्। अन्यथाऽज्ञानप्रमादादिकृते दोषाभावप्रसङ्गात्। तदेवं समानविषयत्वेन सामान्यशास्त्रस्य विशेषेण बाधान्नास्ति दोषवत्त्वमतो नित्यं यज्ञादिकर्म न त्याज्यमिति। अनेन विधिनिषेधयोः समानबलता वार्यते सामान्यविशेषन्यायं संपादयितुम्॥३॥

एवं मतभेदमुपन्यस्य स्वमतं कथयितुमाह—

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः॥ ४॥**

निश्चयमिति। तत्रैवं विप्रतिपन्ने त्यागे निश्चयं मे वचनाच्छृणु त्यागस्य लोकप्रसिद्धत्वात्किमत्र श्रोतव्यमिति मावमंस्था इत्याह—हे पुरुषव्याघ्र पुरुषश्रेष्ठ त्यागोऽयं दुर्बोधः। हि यस्मादयं कर्मत्यागस्तत्त्वविद्भिस्तामसादिभेदेन त्रिविधः सम्यग्विवेकेन प्रकीर्तितः। त्रैविध्यं च 'नियतस्य तु संन्यासः कर्मणः' इत्यादिना वक्ष्यति॥ ४॥

प्रथमं तावन्निश्चयमाह—

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥ ५॥**

यज्ञदानेति द्वाभ्याम्। मनीषिणां विवेकिनां पावनानि चित्तशुद्धिकराणि॥ ५॥

येन प्रकारेण कृतान्येतानि पावनानि भवन्ति तं प्रकारं दर्शयन्नाह—

**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥ ६॥**

एतानीति। यानि यज्ञादिकर्माणि मया पावनानीत्युक्तं एतान्यपि कर्तव्यानि। कथं सङ्गं कर्तृत्वाभिनिवेशं त्यक्त्वा केवलमीश्वराराधनत

कर्तव्यानीति फलानि च त्यक्त्वा कर्तव्यानीति च निश्चितं मे मम मतम् । अत एवोत्तमम् ॥ ६ ॥

प्रतिज्ञातं त्यागस्य त्रैविध्यमिदानीं दर्शयति—

**नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।**
**मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥**

**नियतस्येति** त्रिभिः । काम्यस्य कर्मणो बन्धकत्वात्संन्यासो युक्तः । नियतस्य तु नित्यस्य पुनः कर्मणः संन्यासस्त्यागो नोपपद्यते, सत्त्वशुद्धिद्वारा मोक्षहेतुत्वात् । अतस्तस्य परित्यागः उपादेयेऽपि त्याज्यमित्येवंलक्षणान्मोहादेव भवेत् । स च मोहस्य तामसत्वात्तामसः परिकीर्तितः ॥ ७ ॥

राजसं त्यागमाह—

**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥**

**दुःखमिति** । अकर्त्रात्मबोधं विना केवलं दुःखमित्येवं ज्ञात्वा शरीरायासभयान्नित्यं कर्म त्यजेदिति यत्तादृशस्त्यागो राजसः, दुःखस्य राजसत्वात् । अतस्तं राजसं त्यागं कृत्वा राजसः पुरुषस्त्यागस्य फलं ज्ञाननिष्ठालक्षणं नैव लभत इत्यर्थः ॥ ८ ॥

सात्त्विकं त्यागमाह—

**कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।**
**सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥**

**कार्यमिति** । कार्यमित्येवं बुद्ध्वा नियतमवश्यकर्तव्यतया विहितं कर्म सङ्गं फलं च त्यक्त्वा क्रियत इति यत् तादृशस्त्यागः सात्त्विको मतः ॥ ९ ॥

एवंभूतसात्त्विकत्यागपरिनिष्ठितस्य लक्षणमाह—

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥**

**न द्वेष्टीति** । सत्त्वसमाविष्टः सत्त्वेन संव्याप्तः सात्त्विकत्यागी अकुशलं दुःखावहं शिशिरे प्रातःस्नानादिकं कर्म न द्वेष्टि । कुशले च सुखकरे कर्मणि निदाघे माध्याह्नस्नानादौ नानुषज्जते प्रीतिं न करोति । तत्र हेतुः—मेधावी स्थिरबुद्धिः । यत्र परपरिभवादि महदपि दुःखं सह्यते स्वर्गादिसुखं च त्यज्यते तत्र कियदेतत्तात्कालिकं सुखं दुःखं

चेत्येत्रमनुसंधानवानित्यर्थः । अतएव छिन्नः संशयो मिथ्याज्ञानं देहि सुखदुःखयोरुपादित्सापरिजिहीर्षालक्षणं यस्य सः ॥ १० ॥

नन्वेवंभूतात्कर्मफलत्यागाद्वरं सर्वकर्मत्यागस्तथा सति कर्मविक्षेपाभावेन ज्ञाननिष्ठा सुखं संपद्यते तत्राह—

**नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥**

नेति । देहभृता देहात्माभिमानवता । निःशेषेण सर्वाणि कर्माणि त्यक्तुं नहि शक्यम् । तदुक्तम्—'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्यादिना । तस्माद्यस्तु कर्माणि कुर्वन्नेव कर्मफलत्यागी स एव मुख्यस्त्यागीत्यभिधीयते ॥ ११ ॥

एवंभूतस्य कर्मफलत्यागस्य फलमाह—

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥**

अनिष्टमिति । अनिष्टं नारकित्वं, इष्टं देवत्वं, मिश्रं मनुष्यत्वं, एवं त्रिविधं पापस्य पुण्यस्य चोभयमिश्रस्य च कर्मणो यत्फलं प्रसिद्धं तत्सर्वमत्यागिनां सकामानामेव प्रेत्य परत्र भवति, तेषां त्रिविधकर्मसंभवात् नतु संन्यासिनां क्वचिदपि भवति । संन्यासिशब्देनात्र फलत्यागसाम्यात्प्रकृताः कर्मफलत्यागिनोऽपि गृह्यन्ते । 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स संन्यासी च योगी च' इत्येवमादौ च कर्मफलत्यागिषु संन्यासिशब्दप्रयोगदर्शनात् । तेषां सात्त्विकानां पापासंभवात् ईश्वरार्पणेन च पुण्यफलस्य त्यक्तत्वात्, त्रिविधमपि कर्मफलं न भवतीत्यर्थः ॥ १२ ॥

ननु कर्म कुर्वतः कर्मफलं कथं न भवेदित्याशङ्क्य सङ्गत्यागिनो निरहंकारस्य सतः कर्मफलेन लेपो नास्तीत्युपपादयितुमाह—

**पञ्चैतानि महाबाहो कारणानि निबोध मे ।**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥**

पञ्चैतानीति पञ्चभिः । सर्वकर्मणां सिद्धये निष्पत्तये इमानि वक्ष्यमाणानि पञ्च कारणानि मे वचनान्निबोध जानीहि । आत्मनः कर्तृत्वाभिमाननिवृत्त्यर्थमवश्यमेतानि ज्ञातव्यानीत्येवं तेषां स्तुत्यर्थमाह सांख्य इति । सम्यक् ख्यायते ज्ञायते परमात्माऽनेनेति सांख्यं तत्त्वज्ञानं तस्मिन्, कृतं कर्म तस्यान्तः समाप्तिरस्मिन्निति कृतान्तस्तस्मिन्वेदान्ते

सिद्धान्त इत्यर्थः । यद्वा संख्यायन्ते गण्यन्ते तत्त्वानि यस्मिन्निति सांख्यं, कृतः अन्तो निर्णयो यस्मिन्निति कृतान्तं सांख्यशास्त्रमेव तस्मिन् प्रोक्तानि । अतः सम्यङ्निबोधेत्यर्थः ॥ १३ ॥

तान्येवाह—

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥**

अधिष्ठानमिति । अधिष्ठानं शरीरं, कर्ता चिज्जडग्रन्थिरहंकारः, पृथग्विधमनेकप्रकारं, करणं चक्षुःश्रोत्रादि, विविधाश्च कार्यतः स्वरूपतश्च पृथग्भूताश्चेष्टाः प्राणापानादीनां व्यापाराः । अत्र चैतेष्वेव पञ्चमं दैवं च कारणं चक्षुराद्यनुग्राहकमादित्यादिसर्वप्रेरकोऽन्तर्यामी वा ॥ १४ ॥

एतेषामेव सर्वकर्महेतुत्वमाह—

**शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥**

शरीरेति । यथोक्तैः पञ्चभिः प्रारभ्यमाणं कर्म त्रिष्वेवान्तर्भाव्यम् । शरीरवाङ्मनोभिरित्युक्तं शारीरं वाचिकं मानसं च त्रिविधं कर्मेति प्रसिद्धेः शरीरादिभिर्यद्यत्कर्म धर्म्यं वाऽधर्म्यं वा करोति नरस्तस्य सर्वस्य कर्मण एते पञ्च हेतवः ॥ १५ ॥

ततः किमत आह—

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥**

तत्रेति । तत्र सर्वस्मिन्कर्मणि एते पञ्च हेतव इत्येवं सति केवलं निरुपाधिकमसङ्गमात्मानं तु यः कर्तारं पश्यति शास्त्राचार्योपदेशत्यागेनासंस्कृतबुद्धित्वाद्दुर्मतिरसौ सम्यङ् न पश्यति ॥ १६ ॥

कस्तर्हि सुमतिर्यस्य कर्मलेपो नास्तीत्युक्तमित्यपेक्षायामाह—

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वापि स इमाँल्लोकान्न हन्ति न निबद्ध्यते ॥ १७ ॥**

यस्येति । अहमिति कृतोऽहं कर्तेत्येवंभूतो भावोऽभिप्रायो यस्य नास्ति । यद्वा अहंकृतोऽहंकारस्य भावः स्वभावः कर्तृत्वाभिनिवेशो यस्य नास्ति । शरीरादीनामेव कर्मकर्तृत्वालोचनादित्यर्थः । अत एव यस्य बुद्धिर्न लिप्यते इष्टानिष्टबुद्ध्या कर्मसु न सज्जते स एवंभूतो देहादिव्यति-

रिक्तात्मदर्शी इमाँल्लोकान्सर्वानपि प्राणिनो लोकदृष्ट्या हत्वापि विलि-क्रया स्वदृष्ट्या न हन्ति । न च तत्फलैर्निबद्ध्यते बन्धनं न प्राप्नोति। किं पुनः सत्त्वशुद्धिद्वारा परोक्षज्ञानोत्पत्तिहेतुभिः कर्मभिस्तस्य बन्धश-ङ्केत्यर्थः । तदुक्तम्—'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः। लिप्यते न स पापेन' इति ॥ १७ ॥

'हत्वापि न हन्ति न निबद्ध्यते' इत्येतदेवोपपादयितुं कर्मचोदनाया: कर्माश्रयस्य च कर्मफलादीनां च त्रिगुणात्मकत्वान्निर्गुणस्यात्मनस्त-त्संबन्धो नास्तीत्यभिप्रायेण कर्मचोदनां कर्माश्रयं चाह—

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥**

ज्ञानमिति । ज्ञानमिष्टसाधनमेतदिति बोधः । ज्ञेयमिष्टसाधनं कर्म। परिज्ञाता एवंभूतज्ञानाश्रयः । एवं त्रिविधा कर्मचोदना चोद्यते प्रव-र्त्यते येनेति चोदना । ज्ञानादित्रितयं कर्मप्रवृत्तिहेतुरित्यर्थः । यद्वा चोदनेतिविधिरुच्यते । तदुक्तं भट्टैः—'चोदना चोपदेशश्च विधिश्चैका-र्थवाचिनः' इति । ततश्चायमर्थः—उक्तलक्षणं त्रिगुणात्मकं ज्ञानादित्रि-तयमवलम्ब्य कर्मविधिः प्रवर्तत इति । तदुक्तम्—'त्रैगुण्यविषया वेदाः' इति । तथाच करणं साधकतमं, कर्म च कर्तुरीप्सिततमम्, कर्ता क्रियानिर्वर्तकः । कर्म संगृह्यतेऽस्मिन्निति कर्मसंग्रहः करणादित्रिविधं कारकं क्रियाश्रय इत्यर्थः । संप्रदानादिकारकत्रयं तु परम्परया क्रिया-निर्वर्तकमेव केवलं न तु साक्षात्क्रियाया आश्रयः । अतः करणादित्रि-तयमेव क्रियाश्रय इत्युक्तम् ॥ १८ ॥

ततः किमत आह—

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।**
**प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥**

ज्ञानमिति । गुणाः सम्यक्कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्तेऽस्मि-न्निति गुणसंख्यानं सांख्यशास्त्रं तस्मिन् ज्ञानं कर्म च क्रिया कर्ता च प्रत्येकं सत्त्वादिगुणभेदेन त्रिधैवोच्यते । तान्यपि ज्ञानादीनि वक्ष्यमाणानि यथा-वच्छृणु । त्रिधैवेत्येवकारो गुणत्रयोपाधिव्यतिरेकेणात्मनः स्वतःकर्तृत्वा-दिप्रतिषेधार्थः । चतुर्दशेऽध्याये 'तत्र सत्त्वं निर्मलत्वात्' इत्यादिना गुणानां बन्धकत्वप्रकारो निरूपितः । सप्तदशेऽध्याये 'यजन्ते सात्त्विका देवान्' इत्यादिना गुणकृतत्रिविधस्वभावनिरूपणेन रजस्तमःस्वभावं परित्यज्य सात्त्विकाहारादिसेवया सात्त्विकस्वभावः संपादनीय इत्युक्तम्।

इह तु क्रियाकारकफलादीनामात्मसंबन्धो नास्तीति दर्शयितुं सर्वेषां त्रिगुणात्मकत्वमुच्यत इति विशेषो ज्ञातव्यः ॥ १९ ॥

तत्र ज्ञानस्य सात्त्विकादित्रैविध्यमाह—

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥**

सर्वभूतेष्विति त्रिभिः । सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु विभक्तेषु परस्परं व्यावृत्तेषु अविभक्तमनुस्यूतं एकमव्ययं निर्विकारं भावं परमात्मतत्त्वं येन ज्ञानेनेक्षते आलोचयति तज्ज्ञानं सात्त्विकं विद्धि ॥ २० ॥

राजसं ज्ञानमाह—

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥**

पृथक्त्वेनेति । पृथक्त्वेन तु यज्ज्ञानमित्यस्यैव विवरणं सर्वेषु भूतेषु देहेषु नानाभावान्वस्तुत एवानेकान्क्षेत्रज्ञान्पृथग्विधान्सुखी दुःखीत्यादिरूपेण विलक्षणान् येन ज्ञानेन वेत्ति तज्ज्ञानं राजसं विद्धि ॥ २१ ॥

तामसं ज्ञानमाह—

**यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।**
**अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥**

यत्त्विति । एकस्मिन्कार्ये देहे प्रतिमादौ वा कृत्स्नवत्परिपूर्णवत्सक्तमेतावानेवात्मा ईश्वरो वेत्यभिनिवेशयुक्तम्, अहैतुकं निरुपपत्तिकम्, अतत्त्वार्थवत्परमार्थावलम्बनशून्यम् । अतएवाल्पं तुच्छम् । अल्पविषयत्वादल्पफलत्वाच्च । यदेवंभूतं ज्ञानं तत्तामसमुदाहृतम् ॥ २२ ॥

इदानीं त्रिविधं कर्माह—

**नियतं सङ्गरहितमरागद्वेषतः कृतम् ।**
**अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥**

नियतमिति त्रिभिः । नियतं नित्यतया विहितं, सङ्गरहितमभिनिवेशशून्यं, अरागद्वेषतः पुत्रादिप्रीत्या वा शत्रुद्वेषेण वा यत्कृतं न भवति, फलं प्राप्तुमिच्छतीति फलप्रेप्सुस्तद्विलक्षणेन निष्कामेण कर्त्रा यत्कृतं कर्म तत्सात्त्विकमुच्यते ॥ २३ ॥

राजसं कर्माह—

**यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।**
**क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥**

यत्त्विति । यत्तु कर्म कामेप्सुना फलं प्राप्तुमिच्छता साहंकारेण वा मत्समः कोऽन्यः श्रोत्रियोऽस्तीत्येवं निरूढाहंकारयुक्तेन च क्रियते यच्च पुनर्बहुलायासमतिक्लेशयुक्तं तत्कर्म राजसमुदाहृतम् ॥ २४ ॥

तामसं कर्माह—

**अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।**
**मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥**

अनुबन्धमिति । अनुबध्यत इत्यनुबन्धः पश्चाद्भाविशुभाशुभम्, क्षयं वित्तव्ययं, हिंसां परपीडां च, पौरुषं स्वसामर्थ्यं वा, अनवेक्ष्य अपर्यालोच्य केवलं मोहादेव यत्कर्मारभ्यते तत्तामसमुच्यते ॥ २५ ॥

कर्तारं त्रिविधमाह—

**मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।**
**सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥**

मुक्तसङ्ग इति त्रिभिः । मुक्तसङ्गस्त्यक्ताभिनिवेशः, अनहंवादी गर्वोक्तिरहितः, धृतिर्धैर्यम्, उत्साह उद्यमः, ताभ्यां समन्वितः संयुक्तः, आरब्धस्य कर्मणः सिद्धावसिद्धौ च निर्विकारो हर्षविषादशून्यः । एवंभूतः कर्ता सात्त्विक उच्यते ॥ २६ ॥

राजसं कर्तारमाह—

**रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।**
**हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥**

रागीति । रागी पुत्रादिषु प्रीतिमान्, कर्मफलप्रेप्सुः कर्मफलकामी, लुब्धः परस्वाभिलाषी, हिंसात्मको मारकस्वभावः, अशुचिर्विहितशौचशून्यः, लाभालाभयोर्हर्षशोकाभ्यामन्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥

तामसं कर्तारमाह—

**अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।**
**विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥**

अयुक्त इति । अयुक्तोऽनवहितः, प्राकृतो विवेकशून्यः, स्तब्धोऽनम्रः, शठः शक्तिगूहनकारी, नैष्कृतिकः परावमानी, अलसोऽनुद्यमशीलः, विषादी शोकशीलः, यदद्य वा श्वो वा कार्यं तन्मासेनापि संपादयति यः स दीर्घसूत्री । एवंभूतः कर्ता तामस उच्यते । कर्तृत्रैविध्येनैव ज्ञातुरपि त्रैविध्यमुक्तं भवति । कर्मत्रैविध्येन च ज्ञेयस्यापि त्रैविध्यं वेदितव्यम् । बुद्धेस्त्रैविध्येन करणस्याप्युक्तं भविष्यति ॥ २८ ॥

T

इदानीं बुद्धेर्धृतेश्चापि त्रैविध्यं प्रतिजानीते—

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥**

बुद्धेरिति । स्पष्टार्थः ॥ २९ ॥

तत्र बुद्धेस्त्रैविध्यमाह—

**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥३०॥**

प्रवृत्तिं चेति त्रिभिः । प्रवृत्तिं च धर्मे, निवृत्तिं चाधर्मे । यस्मिन् देशे काले च यत्कार्यमकार्यं च भयाभये कार्याकार्यनिमित्तावर्थानर्थौ कथं बन्धः कथं वा मोक्ष इति या बुद्धिरन्तःकरणं वेत्ति सा सात्त्विकी । यया पुमान् वेत्तीति वक्तव्ये करणे कर्तृत्वोपचारः काष्ठानि पचन्तीतिवत् ॥ ३० ॥

राजसीं बुद्धिमाह—

**यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥**

ययेति । अयथावत्संदेहास्पदत्वेनेत्यर्थः । स्पष्टमन्यत् ॥ ३१ ॥

तामसीं बुद्धिमाह—

**अधर्मं धर्ममिति या मन्यते तमसावृता ।**
**सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥**

अधर्ममिति । विपरीतग्राहिणी बुद्धिस्तामसीत्यर्थः । बुद्धिरन्तःकरणं पूर्वोक्तम् । ज्ञानं तु तद्वृत्तिः, धृतिरपि तद्वृत्तिरेव । यद्वा अन्तःकरणस्य धर्मिणो बुद्धिरप्यध्यवसायलक्षणा वृत्तिरेव । इच्छाद्वेषादीनां तद्वृत्तीनां बहुत्वेऽपि धर्माधर्मभयाभयसाधनत्वेन प्राधान्यादेतासां त्रैविध्यमुक्तम् । उपलक्षणं चैतदन्यासाम् ॥ ३२ ॥

इदानीं धृतेस्त्रैविध्यमाह—

**धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।**
**योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥**

धृत्येति त्रिभिः । योगेन चित्तैकाग्र्येण हेतुना व्यभिचारिण्या विषयान्तरमधारयन्त्या यया धृत्या मनसः प्राणस्येन्द्रियाणां च क्रिया धारयते नियच्छति सा धृतिः सात्त्विकी ॥ ३३ ॥

राजसीं धृतिमाह—

**यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ।**
**प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥**

यया त्विति । यया तु धृत्या धर्मार्थकामान्प्राधान्येन धारयते न विमुञ्चति तत्प्रसङ्गेन फलाकाङ्क्षी च भवति सा राजसी धृतिः ॥ ३४ ॥

तामसीं धृतिमाह—

**यया स्वप्नं भयं शोकं विषादं मदमेव च ।**
**न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५ ॥**

ययेति । दुष्टा अविवेकबहुला मेधा यस्य स दुर्मेधाः पुरुषः य धृत्या स्वप्नादीन्न विमुञ्चति पुनःपुनरावर्तयति, स्वप्नोऽत्र निद्रा, स धृतिस्तामसी ॥ ३५ ॥

सुखस्य त्रैविध्यं प्रतिजानीते अर्धेन—

**सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।**
**अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥**

सुखमिति । स्पष्टार्थः । तत्र सात्त्विकं सुखमाह—अभ्यासादि सार्धेन । यत्र यस्मिन्सुखे अभ्यासादतिपरिचयाद्रमते नतु विषयसुख इव सहसा रतिं प्राप्नोति । यस्मिन् रममाणश्च दुःखस्यान्तमवसा नितरां गच्छति प्राप्नोति ॥ ३६ ॥

कीदृशं तत्—

**यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।**
**तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥**

यत्तदिति । यत्तत्किमपि अग्रे प्रथमं विषमिव मनःसंयमाधीनत् दुःखावहमिव भवति । परिणामे त्वमृतसदृशम् । आत्मविषया बुद्धिरात्म बुद्धिस्तस्याः प्रसादेन रजस्तमोमलत्यागेन स्वच्छतयावस्थानं ततो जा यत्सुखं तत्सात्त्विकं प्रोक्तं योगिभिः ॥ ३७ ॥

राजसं सुखमाह—

**विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।**
**परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥**

विषयेन्द्रियेति । विषयाणामिन्द्रियाणां च संयोगाद्यत्तत्प्रसि

स्त्रीसङ्गादि सुखममृतमुपमा यस्य तादृशं भवत्यग्रे प्रथमं परिणामे तु विषतुल्यमिहामुत्र च दुःखहेतुत्वात्तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

तामसं सुखमाह—

**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥**

यदिति । अग्रे प्रथमक्षणेऽनुबन्धे च पश्चादपि यत्सुखमात्मनो मोहकरम्, तदेवाह—निद्रा चालस्यं च प्रमादश्च कर्तव्यार्थावधानराहित्येन मनोराज्यमेतेभ्य उत्तिष्ठति यत्सुखं तत्तामसमुदाहृतम् ॥ ३९ ॥

अनुक्तमपि संगृह्णन्प्रकरणार्थमुपसंहरति—

**न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।**
**सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥**

न तदस्तीति । एभिः प्रकृतिसंभवैः सत्त्वादिभिस्त्रिभिर्गुणैर्मुक्तं हीनं सत्त्वं प्राणिजातमन्यद्वा यत्स्यात्तत्पृथिव्यां मनुष्यलोकादिषु दिवि देवेषु च क्वापि नास्तीत्यर्थः ॥ ४० ॥

ननु च यद्येवं सर्वमपि क्रियाकारकफलादिकं प्राणिजातं च त्रिगुणात्मकमेव कथं तर्ह्यस्य मोक्ष इत्यपेक्षायां स्वस्वाधिकारविहितैः कर्मभिः परमेश्वराराधनात्तत्प्रसादलब्धज्ञानेनेत्येवं सर्वगीतार्थसारं संगृह्य प्रदर्शयितुं प्रकरणान्तरमारभते—

**ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥**

ब्राह्मणेत्यादि यावदध्यायसमाप्ति । हे परंतप शत्रुतापन ब्राह्मणानां क्षत्रियाणां विशां च शूद्राणां च कर्माणि प्रविभक्तानि प्रकर्षेण विभागतो विहितानि । शूद्राणां स्वभावात्पृथक्करणं द्विजत्वाभावेन वैलक्षण्यात् । विभागोपलक्षणमाह—स्वभावः सात्त्विकादिः प्रभवति प्रादुर्भवति येभ्यस्तैर्गुणैरुपलक्षणभूतैः । यद्वा स्वभावः पूर्वजन्मसंस्कारस्तस्मात्प्रादुर्भूतैरित्यर्थः । तत्र सत्त्वप्रधाना ब्राह्मणाः । सत्त्वोपसर्जनरजःप्रधानाः क्षत्रियाः । तमउपसर्जनरजःप्रधाना वैश्याः । रजउपसर्जनतमःप्रधानाः शूद्राः ॥ ४१ ॥

तत्र ब्राह्मणस्य स्वाभाविकानि कर्माण्याह—

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥**

शम इति । शमश्चित्तोपरमः । दमो बाह्येन्द्रियोपरमः । तपः पूर्वोक्तं

शारीरादि। शौचं बाह्याभ्यन्तरम्, क्षान्तिः क्षमा, आर्जवमवक्रता, ज्ञानं शास्त्रीयम्, विज्ञानमनुभवः, आस्तिक्यमस्तिपरलोक इति निश्चयः। एतच्छमादि ब्राह्मणस्य स्वभावाज्जातं कर्म ॥ ४२ ॥

क्षत्रियस्य स्वाभाविकानि कर्माण्याह—

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥**

शौर्यमिति। शौर्यं पराक्रमः। तेजः प्रागल्भ्यम्। धृतिर्धैर्यम्। दाक्ष्यं कौशलम्। युद्धे चाप्यपलायनमपराङ्मुखता। दानमौदार्यम्। ईश्वरभावो नियमनशक्तिः। एतत्क्षत्रियस्य स्वभावजं कर्म ॥ ४३ ॥

वैश्यशूद्रयोः कर्माह—

**कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥**

कृषीति। कृषिः कर्षणम्, गाः रक्षतीति गोरक्षस्तस्य भावो गौरक्ष्यं पाशुपाल्यमित्यर्थः। वाणिज्यं क्रयविक्रयादि। एतद्वैश्यस्य स्वभावजं कर्म। त्रैवर्णिकपरिचर्यात्मकं शूद्रस्यापि स्वभावजं कर्म ॥ ४४ ॥

एवंभूतस्य ब्राह्मणादिकर्मणो ज्ञानहेतुत्वमाह—

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥**

स्वे स्व इति। स्वस्वाधिकारविहिते कर्मण्यभिरतः परिनिष्ठितो नरः संसिद्धिं ज्ञानयोग्यतां लभते। कर्मणां ज्ञानप्राप्तिप्रकारमाह— स्वकर्मेति सार्धेन। स्वकर्मपरिनिष्ठितो यथा येन प्रकारेण तत्त्वज्ञानं लभते तं प्रकारं शृणु ॥ ४५ ॥

तमेवाह—

**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥**

यत इति। यतोऽन्तर्यामिणः परमेश्वराद्भूतानां प्राणिनां प्रवृत्तिश्चेष्टा भवति। येन च कारणात्मना सर्वमिदं विश्वं ततं व्याप्तं तमीश्वरं स्वकर्मणाऽभ्यर्च्य पूजयित्वा सिद्धिं लभते मनुष्यः ॥ ४६ ॥

स्वकर्मणेति विशेषणस्य फलमाह—

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥**

श्रेयानिति । विगुणोऽपि स्वधर्मः सम्यगनुष्ठितादपि परधर्माच्छ्रेयाञ्श्रेष्ठः । न च बन्धुवधादियुक्ताद्युद्धादेः स्वधर्माद्भिक्षाटनादिपरधर्मः श्रेष्ठ इति मन्तव्यम् । यतः स्वभावेन पूर्वोक्तेन नियतं नियमेनोक्तं कर्म कुर्वन्किल्बिषं नाप्नोति ॥ ४७ ॥

यदि पुनः सांख्यदृष्ट्या स्वधर्मे हिंसालक्षणं दोषं मत्वा परधर्मं श्रेष्ठं मन्यसे तर्हि सदोषत्वं परधर्मेऽपि तुल्यमित्याशयेनाह—

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥**

सहजमिति । सहजं स्वभावविहितं कर्म सदोषमपि न त्यजेत् । हि यस्मात् सर्वेऽप्यारम्भा दृष्टादृष्टार्थानि सर्वाण्यपि कर्माणि दोषेण केनचिदावृताः व्याप्ता एव । यथा सहजेन धूमेनाग्निरावृतस्तद्वत् । अतो यथाग्नेर्धूमरूपं दोषमपाकृत्य प्रताप एव तमःशीतादिनिवृत्तये सेव्यते तथा कर्मणोऽपि दोषांशं विहाय गुणांश एव सत्त्वशुद्धये सेव्यत इत्यर्थः ॥ ४८ ॥

ननु कथं कर्मणि क्रियमाणे दोषांशप्रहाणेन गुणांश एव संपत्स्यत इत्यपेक्षायामाह—

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥**

असक्तेति । असक्ता सङ्गशून्या बुद्धिर्यस्य, जितात्मा निरहंकारः, विगता स्पृहा फलविषयेच्छा यस्मात्स एवंभूतेन स त्यागः सात्त्विको मत इत्येवं पूर्वोक्तेन कर्मासक्तितत्फलयोस्त्यागलक्षणेन संन्यासेन नैष्कर्म्यसिद्धिं सर्वकर्मनिवृत्तिलक्षणां सत्त्वशुद्धिमधिगच्छति । यद्यपि सङ्गफलयोस्त्यागेन कर्मानुष्ठानमपि नैष्कर्म्यमेव, कर्तृत्वाभिनिवेशाभावात्, तदुक्तम्—'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यादिश्लोकचतुष्टयेन, तथाप्यनेनोक्तलक्षणेन संन्यासेन परमां नैष्कर्म्यसिद्धिं 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी' इत्येवंलक्षणां पारमहंस्यापरपर्यायां प्राप्नोति ॥ ४९ ॥

एवंभूतस्य परमहंसस्य ज्ञाननिष्ठया ब्रह्मभावप्रकारमाह—

**सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।**
**समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥**

सिद्धिं प्राप्त इति षड्भिः । नैष्कर्म्यसिद्धिं प्राप्तः सन् यथा येन

प्रकारेण ब्रह्म प्राप्नोति तथा तं प्रकारं संक्षेपेणैव मे वचनान्निबोध ॥५०॥

तदेवाह—

**बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।**
**शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥**

बुद्ध्येति । उक्तेन प्रकारेण विशुद्धया पूर्वोक्तया सात्त्विकबुद्ध्या युक्तः, धृत्या सात्त्विक्या आत्मानं कार्यकारणसंघातं तामेव बुद्धिं नियम्य निश्चलां कृत्वा, शब्दादीन्विषयांस्त्यक्त्वा तद्विषयौ रागद्वेषौ च व्युदस्य। 'बुद्ध्या विशुद्धया युक्तः' इत्यादीनां 'ब्रह्मभूयाय कल्पते' इति तृतीयेनान्वयः ॥ ५१ ॥

किंच—

**विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥**

विविक्तेति । विविक्तसेवी शुद्धदेशावस्थायी, लघ्वाशी मितभोजी। एतैरुपायैर्यतवाक्कायमानसः संयतवाग्देहचित्तो भूत्वा नित्यं सर्वदा ध्यानेन यो योगो ब्रह्मसंस्पर्शस्तत्परः सन्, ध्यानाद्यविच्छेदार्थं पुनःपुनर्दृढं वैराग्यं सम्यगुपाश्रितो भूत्वा ॥ ५२ ॥

किंच—

**अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥**

अहंकारमिति । ततश्च विरक्तोऽहमित्याद्यहंकारं, बलं दुराग्रहं दर्पं योगबलादुन्मार्गप्रवृत्तिलक्षणम्, प्रारब्धवशात्प्राप्यमाणेष्वपि विषयेषु कामं, क्रोधं, परिग्रहं च विमुच्य विशेषेण त्यक्त्वा, बलादापतत्सु निर्ममः सन्, शान्तः परामुपशान्तिं प्राप्तो ब्रह्मभूयाय ब्रह्माहमिति नैश्चल्येनावस्थानाय कल्पते योग्यो भवति ॥ ५३ ॥

ब्रह्माहमित्येव नैश्चल्येनावस्थानस्य फलमाह—

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥**

ब्रह्मभूत इति । ब्रह्मभूतो ब्रह्मण्यवस्थितः प्रसन्नचित्तो नष्टं न शोचति । न चाऽप्राप्तं काङ्क्षति देहाद्यभिमानाभावात् । अतएव सर्वेष्वपि भूतेषु समः सन् रागद्वेषादिकृतविक्षेपाभावात्सर्वभूतेषु मद्भावनालक्षणां परां मद्भक्तिं लभते ॥ ५४ ॥

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥

भक्त्या मामिति । तया च परया भक्त्या तत्त्वतो मामभिजानाति । कथंभूतम् । यावान् सर्वव्यापी यश्चास्मि सच्चिदानन्दघनस्तथाभूतम् । ततश्च मामेवं तत्त्वतो ज्ञात्वा तदनन्तरं तस्य ज्ञानस्याप्युपरमे सति मां विशते । परमानन्दरूपो भवतीत्यर्थः ॥ ५५ ॥

स्वकर्मभिः परमेश्वराराधनादुक्तं मोक्षप्रकारमुपसंहरति—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥

सर्वकर्माणीति । सर्वकर्माणि नित्यनैमित्तिकानि काम्यानि च कर्माणि पूर्वोक्तक्रमेण मद्व्यपाश्रयः सन् कुर्वाणोऽहमेव व्यपाश्रय आश्रयणीयो नतु स्वर्गादिफलं यस्य सः मत्प्रसादाच्छाश्वतमनादि अव्ययं नित्यं सर्वोत्कृष्टं वैष्णवं पदं प्राप्नोति ॥ ५६ ॥

यस्मादेवं तस्मात्—

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥

चेतसेति । सर्वकर्माणि चेतसा मयि संन्यस्य समर्प्य मत्परः अहमेव परः प्राप्यः पुरुषार्थो यस्य सः । व्यवसायात्मिकया बुद्ध्या योगमाश्रित्य सततं कर्मानुष्ठानकालेऽपि 'ब्रह्मार्पणं ब्रह्महविः' इति न्यायेन मय्येव चित्तं यस्य तथाभूतो भव ॥ ५७ ॥

ततो यद्भविष्यति तच्छृणु—

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥

मच्चित्त इति । मच्चित्तः सन् मत्प्रसादात्सर्वाण्यपि दुर्गाणि दुस्तराणि सांसारिकाणि दुःखानि तरिष्यसि । विपक्षे दोषमाह—अथ चेद्यदि पुनस्त्वमहंकाराज्ज्ञातृत्वाभिमानान्मदुक्तमेतन्न श्रोष्यसि तर्हि विनङ्क्ष्यसि पुरुषार्थाद्भ्रश्यसि ॥ ५८ ॥

कामं विनङ्क्ष्यामि नतु बन्धुभिर्युद्धं करिष्यामीति चेत्तत्राह—

यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥

यदिति । मदुक्तमनादृत्य केवलमहंकारमवलम्ब्य युद्धं न करिष्यामीति त्वं यन्मन्यसेऽध्यवस्यसि एष तेऽध्यवसायो मिथ्यैव, अस्वतन्त्रत्वात्तव । तदेवाह—प्रकृतिस्त्वां रजोगुणरूपेण परिणता सती नियोक्ष्यति युद्धे प्रवर्तयिष्यत्येव ॥ ५९ ॥

किंच—

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६० ॥

स्वभावेति । स्वभावः क्षत्रियत्वे हेतुः पूर्वकर्मसंस्कारस्तस्माज्जातेन स्वकीयेन कर्मणा शौर्यादिना पूर्वोक्तेन निबद्धो यन्त्रितस्त्वं मोहाद्यत्कर्म युद्धलक्षणं कर्तुं नेच्छसि, अवशोऽपि तत्कर्म करिष्यस्येव ॥ ६० ॥

तदेवं श्लोकद्वयेन सांख्यादिमतेन प्रकृतिपारतन्त्र्यं स्वभावपारतन्त्र्यं कर्मपारतन्त्र्यं चोक्तम् । इदानीं स्वमतमाह—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥

ईश्वर इति द्वाभ्याम् । सर्वभूतानां हृदयमध्ये ईश्वरोऽन्तर्यामी तिष्ठति । किं कुर्वन् । सर्वाणि भूतानि मायया निजशक्त्या भ्रामयन् तत्तत्कर्मसु प्रवर्तयन् यथा दारुयन्त्रमारूढानि कृत्रिमाणि भूतानि सूत्रधारो लोके भ्रामयति तद्वदित्यर्थः । यद्वा यन्त्राणि शरीराणि आरूढानि भूतानि देहाभिमानिनो जीवान् भ्रामयन्नित्यर्थः । तथाच श्वेताश्वतराणां मन्त्रः—'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इति । अन्तर्यामिब्राह्मणं च 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति यमात्मा न वेद यस्यात्मा शरीरं एष त आत्मान्तर्याम्यमृतः' इत्यादि ॥ ६१ ॥

तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥

तमिति । यस्मादेवं सर्वे जीवाः परमेश्वरपरतन्त्रास्तस्मादहंकारं परित्यज्य सर्वभावेन सर्वात्मना तमीश्वरमेव शरणं गच्छ । ततस्तस्यैव प्रसादात्परमामुत्कृष्टामुपशान्तिं स्थानं च पारमेश्वरं शाश्वतं नित्यं प्राप्स्यसि ॥ ६२ ॥

सर्वगीतार्थमुपसंहरन्नाह—

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥

इतीति । इति अनेन प्रकारेण ते तुभ्यं सर्वज्ञेन परमकारुणिकेन मया ज्ञानमाख्यातमुपदिष्टम् । कथंभूतम् गुह्याद्गोप्याद्रहस्यमन्त्रयोगादिज्ञानादपि गुह्यतरं एतन्मयोपदिष्टं गीताशास्त्रमशेषतो विमृश्य पर्यालोच्य पश्चाद्यथेच्छसि तथा कुरु । एतस्मिन्पर्यालोचिते सति तव मोहो निवर्तिष्यत इति भावः ॥ ६३ ॥

अतिगम्भीरं गीताशास्त्रमशेषतः पर्यालोचयितुमशक्नुवतः कृपया स्वयमेव तस्य सारं संगृह्य कथयति—

**सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।**
**इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥**

सर्वगुह्यतममिति त्रिभिः । सर्वेभ्योऽपि गुह्येभ्यो गुह्यतमं मे वचः तत्रतत्रोक्तमपि भूयः पुनरपि वक्ष्यमाणं शृणु । पुनःपुनः कथने हेतुमाह—दृढमत्यन्तं मे मम त्वमिष्टः प्रियोऽसीति मत्वा तत एव हेतोस्ते हितं वक्ष्यामि । यद्वा त्वं ममेष्टोऽसि मया वक्ष्यमाणं च दृढं सर्वप्रमाणोपेतमिति निश्चित्य ततस्ते वक्ष्यामीत्यर्थः । दृढमतिरिति केचित्पठन्ति ॥ ६४ ॥

तदेवाह—

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥**

मन्मना इति । मन्मना भव, मच्चित्तो भव, ममैव भक्तो भव, मद्याजी मद्यजनशीलो भव, मामेव नमस्कुरु । एवं वर्तमानस्त्वं मत्प्रसादाल्लब्धज्ञानेन मामेवैष्यसि प्राप्स्यसि । अत्र च संशयं मा कार्षीः । त्वं हि मे प्रियोऽसि । अतः सत्यं यथाभवत्येवं तुभ्यमहं प्रतिजाने प्रतिज्ञां करोमि ६५

ततोऽपि गुह्यतममाह—

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥**

सर्वेति । मद्भक्त्यैव सर्वं भविष्यतीति दृढविश्वासेन विधिकैंकर्यं त्यक्त्वा मदेकशरणो भव । एवं वर्तमानः कर्मत्यागनिमित्तं पापं स्यादिति मा शुचः शोकं मा कार्षीः । यतस्त्वां मदेकशरणं सर्वपापेभ्योऽहं मोक्षयिष्यामि ॥ ६६ ॥

एवं गीतार्थतत्त्वमुपदिश्य तत्संप्रदायप्रवर्तने नियममाह—

**इदं ते नातपस्काय नाभक्ताय कदाचन ।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥**

इदमिति । इदं गीतातत्त्वं ते त्वयाऽतपस्काय स्वधर्मानुष्ठानहीनाय न वाच्यम् । न चाभक्ताय गुरावीश्वरे च भक्तिशून्याय कदाचिदपि वाच्यम्, न चाशुश्रूषवे श्रोतुमनिच्छते परिचर्यामकुर्वते वाच्यम्, मां परमेश्वरं योऽभ्यसूयति मनुष्यदृष्ट्या दोषारोपेण निन्दति तस्मै च न वाच्यम् ॥ ६७ ॥

एतैर्दोषैर्विरहितेभ्यो मद्भक्तेभ्यो गीताशास्त्रोपदेष्टुः फलमाह—

**य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥**

य इति । मद्भक्तेष्वभिधास्यति मद्भक्तेभ्यो यो वक्ष्यति स मयि परां भक्तिं करोति । ततो निःसंशयः सन् मामेव प्राप्नोतीत्यर्थः ॥ ६८ ॥

किंच—

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥**

न चेति । तस्मान्मद्भक्तेभ्यो गीताशास्त्रं व्याख्यातुः सकाशादन्यो मनुष्येषु मध्ये कश्चिदपि मम प्रियकृत्तमोऽत्यन्तं परितोषकर्ता नास्ति नच कालान्तरे भविता भविष्यति । ममापि तस्मादन्यः प्रियतरोऽधुना भुवि तावन्नास्ति । नच कालान्तरेऽपि भविष्यतीत्यर्थः ॥ ६९ ॥

पठतः फलमाह—

**अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।**
**ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥**

अध्येष्यत इति । आवयोः कृष्णार्जुनयोः इमं धर्म्यं धर्मादनपेतं संवादं योऽध्येष्यते जपरूपेण पठिष्यति तेन पुंसा सर्वयज्ञेभ्यः श्रेष्ठेन ज्ञानयज्ञेनाहमिष्टः स्यां भवेयमिति मतिः । यद्यप्यसौ गीतार्थमबुध्यमान एव केवलं जपति तथापि मम तच्छृण्वतो मामेवासौ प्रकाशयतीति बुद्धिर्भवति । यथा लोके यदृच्छयापि कश्चित्कदाचित्कस्यचिन्नाम गृह्णाति तदासौ मामेवायमाह्वयतीति मत्वा तत्पार्श्वमागच्छति, तथाहमपि तत्संनिहितो भवेयम् । अतएव अजामिलक्षत्रबन्धुप्रमुखानां कथंचिन्नामोच्चारणमात्रेण प्रसन्नोऽस्मि, तथैवास्यापि प्रसन्नो भवेयमित्यर्थः ॥ ७० ॥

अन्यस्य जपतो योऽन्यः कश्चिच्छृणोति तस्यापि फलमाह—

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।**
**सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥**

श्रद्धावानिति । यो नरः श्रद्धायुक्तः केवलं शृणुयादपि श्रद्धावानपि कश्चित्किमर्थमुच्चैर्जपति अबद्धं जपतीति वा दोषदृष्टिं करोति तद्व्यावृत्त्यर्थमाह—अनसूयश्च असूयारहितो यः शृणुयात्सोऽपि सर्वैः पापैर्मुक्तः सन् अश्वमेधादिपुण्यकृताँल्लोकान्प्राप्नुयात् ॥ ७१ ॥

सम्यग्बोधानुत्पत्तौ पुनरुपदेक्ष्यामीत्याशयेनाह—

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥ ७२ ॥**

कच्चिदिति । कच्चिदिति प्रश्नार्थे । अज्ञानसंमोहः तत्त्वाज्ञानकृतो विपर्ययः । स्पष्टमन्यत् ॥ ७२ ॥

कृतार्थः सन्—

अर्जुन उवाच ।

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।**
**स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥**

नष्ट इति । आत्मविषयो मोहो नष्टः । यतोऽयमहमस्मीति स्वरूपानुसंधानरूपा स्मृतिस्त्वत्प्रसादान्मया लब्धा । अतः स्थितोऽस्मि युद्धायोपस्थितोऽस्मि । गतो धर्मविषयः संदेहो यस्य सोऽहं तवाज्ञां करिष्य इति ॥ ७३ ॥

तदेवं धृतराष्ट्रं प्रति श्रीकृष्णार्जुनसंवादं कथयित्वा प्रस्तुतां कथामनुसंदधानः—

संजय उवाच ।

**इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।**
**संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥**

इतीति । रोमहर्षणं रोमाञ्चकरं संवादमश्रौषं श्रुतवानहम् । स्पष्टमन्यत् ॥ ७४ ॥

आत्मनस्तच्छ्रवणे संभावनामाह—

**व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।**
**योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥**

व्यासप्रसादादिति । भगवता व्यासेन दिव्यं चक्षुःश्रोत्रादि मह्यं दत्तम् । अतो व्यासस्य प्रसादादेतदहं श्रुतवानस्मि । किं तदित्यपेक्षायामाह—परं योगम् । परत्वमाविष्करोति—योगेश्वराच्छ्रीकृष्णात्स्वयमेव साक्षात्कथयतः श्रुतवानिति ॥ ७५ ॥

किंच—

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥

राजन्निति । हृष्यामि रोमाञ्चितो भवामि हर्षं प्राप्नोमीति वा । स्पष्टमन्यत् ॥ ७६ ॥

किंच—

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ७७ ॥

तच्चेति । तदिति विश्वरूपं निर्दिशति । स्पष्टमन्यत् ॥ ७७ ॥

अतस्त्वं पुत्राणां राज्यादिशङ्कां परित्यजेत्याशयेनाह—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे संन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

यत्रेति । यत्र येषां पाण्डवानां पक्षे योगेश्वरः श्रीकृष्णो वर्तते यत्र च पार्थो गाण्डीवधनुर्धरः तत्रैव श्रीः राज्यलक्ष्मीः, तत्रैव च विजयः, तत्रैव च भूतिरुत्तरोत्तराभिवृद्धिश्च, तत्रैव नीतिर्नयोऽपि ध्रुवा निश्चितेति सर्वत्र संबध्यते । इति मम मतिर्निश्चयः । अत इदानीमपि तावत्सपुत्रस्त्वं श्रीकृष्णं शरणमुपेत्य पाण्डवान्प्रसाद्य सर्वस्वं च तेभ्यो निवेद्य पुत्रप्राणरक्षणं कुर्विति भावः ॥ ७८ ॥

भगवद्भक्तियुक्तस्य तत्प्रसादात्मबोधतः ।
सुखं बन्धविमुक्तिः स्यादिति गीतार्थसंग्रहः ॥ १ ॥

तथाहि 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया', 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन' इत्यादौ भगवद्भक्तेर्मोक्षं प्रति साधनतमत्वश्रवणात्तदेकान्तभक्तिरेव तत्प्रसादोत्थज्ञानावान्तरव्यापारमात्रयुक्ता मोक्षहेतुरिति स्फुटं प्रतीयते । ज्ञानस्य च भक्त्यवान्तरव्यापारत्वमेव युक्तम्— तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं

मामुप यान्ति ते', 'मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते' इत्यादिवचनात् । न च ज्ञानमेव मत्त्वज्ञानमेव भक्तिरिति युक्तम् । 'समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् । भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः' इत्यादौ भेदेन निर्देशात् । न चैवं सति 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिश्रुतिविरोधः शङ्कनीयः, भक्त्यवान्तरव्यापारत्वाज्ज्ञानस्य । न हि काष्ठैः पचतीत्युक्ते ज्वालानामसाधनत्वमुक्तं भवति । किंच 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' 'देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे' 'यमेवैष वृणुते तेन लभ्यः' इत्यादिश्रुतिस्मृतिपुराणवचनान्येवं सति समञ्जसानि भवन्ति तस्माद्भगवद्भक्तिरेव मोक्षहेतुरिति सिद्धम् ॥

तेनैव दत्तया मत्या तद्गीताविवृतिः कृता ।
स एव परमानन्दस्तया प्रीणातु माधवः ॥ १ ॥
परमानन्दपादाब्जरजःश्रीधारिणाधुना ।
श्रीधरस्वामियतिना कृता गीतासुबोधिनी ॥ २ ॥
स्वप्रागल्भ्यबलाद्विलोड्य भगवद्गीतां तदन्तर्गतं
तत्त्वं प्रेप्सुरुपैति किं गुरुकृपापीयूषदृष्टिं विना ।
अम्बु स्वाञ्जलिना निरस्य जलधेरादित्सुरन्तर्मणी-
नावर्तेषु न किं निमज्जति जनः सत्कर्णधारं विना ॥ ३ ॥

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे योगशास्त्रनिर्णयसंन्यासादितत्त्वनिर्णये श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां संन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

याप्रीतिरविवेकानां विषयेष्वनपायिनी
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु ॥

देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति
यतोऽध्यगमत्स्वरूपम् । दैवादपेतमुत दैववशादुपे-
तं वासो श्री० गी० १७ यथा परिकृतं मदिरामदान्धः

ज्ञानदीपेन विवेकप्रत्ययरूपेण भक्तिप्रसादस्नेहाभिषक्तेन मद्भावना
भिनिवेशवातेरितेन [illegible] विरक्ता

न्तःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषाकलुषितनिवातापवरक
स्थेन नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेन ॥

मुक्ति निरूपण

दुराचाररतो वाऽपि मन्नामभजनात्कपे सालोक्यमुक्तिमाप्नो
ति न तु लोकान्तरादिकम् । काश्यां तु ब्रह्मनालेऽस्मिन्मृतो मत्तार
कमनुध्यान् निर्धूताशेषपापौघो मत्सारूप्यं भजत्ययम् । सदाचारर
तो भक्त्या द्विजो नित्यमनन्यधीः मयि सर्वात्मके भावो मत्सामीप्यं
भजत्ययम् । गुरूपदिष्टमार्गेण ध्यात्वा मद्रूपमव्ययम् मत्सायुज्यं
द्विजः सम्यग्भजेद् भ्रमरकीटवत् ॥

स्मृत्युक्त आत्मशब्दार्थः

तत्र आत्मा द्विविधः व्यवहारविशिष्टः केवलश्च । व्यवहारोऽपि त्रिविधः
जागरणम् स्वप्नः सुषुप्तिश्चेति तत्र सुषुप्त्यवस्थायां जीवः सोपाधिविल
ये सति परमानन्दरूपं ब्रह्म यस्मादाप्नोति तस्मादात्मेति —
स्वप्नावस्थायाम् जीवो जागृतिस्थपदार्थवासनाः यस्मादादत्ते
गृह्णाति [illegible] तस्मादात्मा । इह जाग्रदवस्थायां चक्षुरादीन्द्रि
यैर्बाह्यान् विषयानत्ति भुङ्क्ते तस्मादात्मा । यद्यस्मादस्यात्मनो
भावः स्वरूपविशेषः सन्ततः परिच्छेदरहितः सन्नातनोति सातत्येन
सर्वत्र सङ्गच्छते इत्यात्मा चतुर्थः केवलात्म परमात्मशब्दार्थनिर्वचनम्
शास्त्रेण तस्य परमार्थदृष्टिः कार्यस्य मनन्यपतिचापरोक्षात् ।
प्रारब्धनाशात् प्रतिभासनाशः एवं त्रिधा नश्यति चात्ममाया ।
तत्पश्चादिदानीम् प्रज्ञाता आत्मगोचराः स्मरणादनुमीयन्ते [illegible]

उपासनं नाम

यथाशास्त्रमुपास्यस्यार्थस्य विषयीकरणेन सामीप्यमुपग
म्य तैलधारावत् समानप्रत्ययप्रवाहेण दीर्घकालं यदासनं चिन्तनं तदु
पासनमाचक्षते ॥ अथ कूटस्थार्थः
अविद्याद्यनेकसंसारबीजमन्तर्दोषमायाऽव्याकृतादिशब्दवाच्या
तस्मिन्कूटे स्थितं तदध्यक्षतया तत्कूटस्थं

निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ये मन्दास्तेऽनु
कम्प्यन्ते सविशेषनिरूपणैः । वशीकृते मनस्येषां सगु
णब्रह्मशीलनात् तदेवाविर्भवेत् साक्षादपेतोपाधिकल्प
नम् । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृ
त्तिः सामानाधिकरण्यम् ॥
तत्त्वमस्यादिवाक्यं च तादात्म्यप्रतिपादने लक्ष्यौ तत्त्वंपदा
र्थौ द्वावुपादाय प्रवर्तते । संसर्गो वा विशिष्टो वा वाक्यार्थो
नात्र संमतः अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः
मानेन मेयाऽवगतिः [illegible] धर्मस्य जायते द्विविधं [illegible]
मेयेन मानाऽवगतिस्तु [illegible] वेदान्तवाक्ये [illegible] हि मेयम्
विषयचैतन्याभिव्यञ्जकोऽन्तःकरणस्तानयोः परिणामः
। विशेषः वृत्तिः । अपरोक्षव्यवहारजननसंमुखप्रत्ययं
वा — भावि व्यवहारजनकत्वम्

व्यावहारिक प्रपञ्चः मिथ्या- दृश्यत्वात्

शुक्तिरूप्यवत्
सनातन साधन

व
१८६३

नित्य शुद्ध बुद्ध मुक्त स्वभाव विज्ञानानन्द घन नित्य निर्विकार निराकार ब्रह्म भी भगवान का स्वस्वरूप ही है उसके देह या धाम की कोई कल्पना नहीं हो सकती उस आलोचना हीन अव्यक्त निरंजन निराकार का अवतार नहीं होता। अवतार होता है आनन्दमय विज्ञानानन्द घन निर्विकार समग्र भगवान का जिसका एक स्वरूप निराकार ब्रह्म है

बाधः त्रिविधः शास्त्रीयो यौक्तिकः प्रत्यक्षश्च। अथात आदेशो नेति नेति नेह नानास्ति किंचनेत्यादि शास्त्रात् ब्रह्मव्यतिरेकेण प्रपंचाभाव निश्चयः शास्त्रीयो बाधः मृद्व्यतिरेकेण घटाभाव निश्चयवत् निखिल कारणी ब्रह्मव्यतिरेकेण निखिल प्रपंचाभाव निश्चय यद् दृश्यमान स्य मिथ्यात्व निश्चयेन ब्रह्मात्म भाव निश्चयो यौक्तिक बाधः अहं ब्रह्मास्मीति तत्त्वमस्यादि वाक्यजन्य साक्षात्कारेण ज्ञानं तत्कार्ये निवृत्तिः प्रत्यक्ष बाधः

श्रीमच्छंकरभगवच्छिष्यप्रणीता

# ब्रह्मसूत्रवृत्तिः

(अद्वैतमञ्जरी)

वाक्केइत्युपाह्वगङ्गाधरभट्टसुतेन महादेवशर्मणा

संशोधिता

मणिलाल इच्छाराम देशाई इत्यनेन स्वीये

गुजराती मुद्रणालयेऽङ्कयित्वा

तत्रैव प्रकाशिता ।

विक्रमसंवत् १९७१ खिस्ताब्दः १९१४

मूल्यं द्वादशाणकाः ।

श्रीहरि

लिंगज्ञानजन्य ज्ञानं अनुमितिः यथाऽयं पर्वतः वह्निमान् धूमवत्वात् यथा धूमवान् सवह्निमान् यथा (अन्नपाचनालयः) महानसः सिद्धान्तपक्षे जीवब्रह्माभिन्नः सच्चिदानंदलक्षणत्वात् ब्रह्मवत् ॥ सादृश्यप्रमितिः उपमितिः यथा गो सदृशो गवयः । वाक्यकरणिका प्रमा, शाब्दी प्रमा । यथा तत्वमस्यादेः अहं ब्रह्मास्मीति प्रमा ॥ वाक्यार्थ प्रमा च ॥ प्रकरणप्रतिपाद्यस्य प्रशंसनं अर्थवादः । प्रकरण प्रतिपाद्यस्य दृष्टान्तैः प्रतिपादनं उपपत्तिः ॥ यथोक्तैः षड्भिर्लिंगैः सर्ववेदान्तानां अद्वितीये ब्रह्मणि तात्पर्यम् तदेकान्तिकेनावधारणम् श्रवणम् । श्रुतस्यार्थस्योपपत्तिभिश्चिंतनं मननम् । विजातीय प्रत्यय तिरस्कारेण सजातीय प्रत्यय प्रवाही करणं निदिध्यासनम् ॥ बाध शास्त्रीय १ यौक्तिक २ प्रात्यक्षिक ३ ॥ अथात आदेशो नेति नेति । नेहनानास्ति किञ्चनेत्यादि शास्त्रैः यद् धिष्ठानस्वरूपे परे ब्रह्मणि सर्वप्रपंचाभाव निश्चायकत्वगुणम् शास्त्रीयबाधः । जैसे मृत्तिका रूप उपादानकारण से भिन्न करके घट रूप कार्य का अभाव निश्चय होता है वैसे सर्वप्रपंच का अभिन्न निमित्तोपादान कारण जो ब्रह्म है उस ब्रह्म से भिन्न सर्व प्रपंच का अभाव निश्चय करके फिर



दृश्य प्रपंच का मिथ्यात्व का निश्चय करके जो ब्रह्म ज्ञान का निश्चय है वह यौक्तिक बाध है । अहं ब्रह्मास्मि तत्वमसि इत्यादि महावाक्य जन्य साक्षात्कार के जो कार्य सहित प्रपंच, अज्ञान की निवृत्ति है सो प्रात्यक्षिक बाध है । वैराग्य दो प्रकार का अपर १ पर २ वैराग्यं परमेतस्य मोक्षस्य परमावधिः इसकी ही तारतम्यता से कुटीचक बहूदक हंस परमहंस इत्यादि चार प्रकार होता है तहाँ अपर वैराग्य भी यतमान व्यतिरेक एकेन्द्रिय वशीकार तहाँ संसार में यह सार है यह असार है । इसके विवेक को यतमान १ चित्तस्थ जो रागादि दोष वे कितने जये कितने जाने की हैं रहों के दूर करने का जो प्रयत्न व्यतिरेक है । मन में विषयों की इच्छा के विद्यमान रहते हुये उनके निरोध का प्रयत्न यह एकेन्द्रिय है दृष्टानुश्रविक विषय वितृष्णस्य वशीकार संज्ञा वैराग्यम् ॥ स्मृतिभिन्नं ज्ञानं स्मृतिः । ज्ञानं अनुभूतिः ... अवेद्यत्वे सति अपरोक्ष व्यवहार योग्यत्वं स्वप्रकाशत्वम् ॥

परवैराग्य सूत्र ततः परं पुरुषख्यातेर्गुण वैतृष्ण्यम् । तीव्र संवेगानामासन्नः समाधिलाभः ॥ निःसंगता मुक्तिपदं यतीनां संगादशेषाः प्रभवन्ति दोषाः आरूढयोगोऽपि निपात्यतेऽधः संगेन योगी किमुताल्पसिद्धिः ॥ पूर्ण बोध की अवधि अहं हि सर्वं न च किंचिदन्यं निरूपणायामनिरूपणायाम् इयं हि वेदस्य परा हि निष्ठा ममानुभूतिश्च न संशयश्च ॥

## ब्रह्मसूत्रस्थाधिकरणानुक्रमणिका ।

सजातीय विजातीय भेदनहीं अवयव गुण क्रिया जाति संबंधनहीं स्वगत सम्बन्ध भी नहीं ॥
अपर्याय ... निशिष्ट ... ॥
विषय चैतन्याभि[व्य]ंजकोऽन्तःकरणस्तानयोः परिणाम विशेषः वृत्ति
अपरोक्ष व्यवहार ... अभि[व्य]ंजकत्वम् ॥
उपादान समसत्ताकान्यथा भावः परिणामः ॥
उपादान विषमसत्ताकान्यथा भावः विवर्त्तः ॥



## तृतीयाध्याये पादः ४



## चतुर्थाध्याये पादः १



षट् प्रमा
प्रत्यक्ष - अनुमिति - उपमिति - शब्द - अर्थापत्ति -
- प्रमान प्रमा -

प्रत्यक्ष प्रमा २ बाह्यप्रत्यक्षप्रमा - अंतरप्रत्यक्ष प्रमा
बाह्यप्रमा - बाह्यार्थ को विषय करने वाली ॥
अंतरप्रमा - प्रमा ... विषय करने वाली



बाह्य शब्द-स्पर्श-रूप-रस-गन्ध - पञ्चप्रत्यक्ष प्रमा
इनके करण श्रोत्र-त्वक्-चक्षु-रसना-घ्राण-
अंतरप्रत्यक्षप्रमा २ आत्मगोचरा - सुखादिगोचरा ॥
आत्मगोचरा २ विशिष्टात्मविषया स्वरूपात्मविषया २

पृ.



अहं सुखी - अहं दुःखी इत्यादि के सुखादि विषयक है —

समाप्ता ब्रह्मसूत्राधिकरणसूची ।

पदपदार्थयोः स्मार्यस्मारकसंबन्धः संगतिः सा द्विविधा - शक्ति - लक्षणा ॥ पूर्वोक्त संगति को वृत्ति भी कहते हैं ।
पदपदार्थयोर्वाच्यवाचकसंबंधः शक्तिः
शक्यसंबंधः लक्षणा [illegible] मंडपं भोजय -
लक्षणा का विभागः केवललक्षणा - लक्षितलक्षणा -
शक्यसाक्षात्संबंधः केवललक्षणा - सा त्रिविधा
जहल्लक्षणा १ अजहल्लक्षणा २ जहदजहल्लक्षणा ३
यथा गंगायां घोषः प्रतिपत्तौ
अजहल्लक्षणा शक्यार्थ ... संबंध्यर्थ प्रतीतिर्वृत्तिः
यथा मंचाः क्रोशन्ति



जहदजहल्लक्षणा
शक्यैकदेशपरित्यागेन ए-
कदेशे वृत्तिः यथा सोऽयं देव-
दत्तः ॥ शक्यपरंपरासंबन्धः लक्षितलक्षणा । यथा द्विरेफो रौति
गौणीलक्षणा यथा सिंहो देवदत्तः ॥
षड्विध लिंग प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनो आद्यन्तयोः प्रतिपादनं उपक्रमोपसंहारौ । प्रकरणप्रतिपाद्यस्य पुनः पुनः प्रतिपादनं अभ्यासः ॥ प्रकरणप्रतिपाद्यस्य मानान्तराविषयता अपूर्वता ॥ प्रकरणप्रतिपाद्यस्य श्रूयमाणं तज्ज्ञानस्य तत्प्राप्तिर्वा फलम् ॥ प्रकरणप्रतिपाद्यस्य प्रशंसनं अर्थवादः ॥ प्रकरणप्रतिपाद्यस्य दृष्टान्तैः प्रतिपादनमुपपत्तिः ॥



श्रीमच्छंकरभगवत्पादशिष्यप्रणीता

# ब्रह्मसूत्रवृत्तिः ।

## ( अद्वैतमञ्जरी )

### प्रथमाध्यायस्य प्रथमः पादः

जिज्ञासाधिकरणम् ॥ १ ॥

**अथातो ब्रह्मजिज्ञासा ॥ १ ॥**

'शान्तो दान्त' इत्यादिश्रुतेः 'आत्मा वा अरे द्रष्टव्यः' इत्यादिश्रुतेश्च अथ साधनचतुष्टयसंपत्त्यनन्तरम् अतः अधिकारस्य संपूर्णत्वात् ब्रह्मजिज्ञासा कर्तव्या ब्रह्मविचारः कर्तव्य इत्यर्थः ॥ १ ॥

जन्माद्यधिकरणम् ॥ २ ॥

जिज्ञास्यस्य ब्रह्मणो लक्षणमाह—

**जन्माद्यस्य यतः ॥ २ ॥**

'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतेः अस्य प्रपञ्चस्य जन्मादि यतः कारणात् भवति, तत ब्रह्मेत्यर्थः । जगज्जन्मस्थितिलयकारणत्वं ब्रह्मणो लक्षणमुक्तं भवति ॥ २ ॥

शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

लक्षणमुक्त्वा प्रमाणमाह—

**शास्त्रयोनित्वात् ॥ ३ ॥**

'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यादिश्रुत्या शास्त्रप्रमाणकत्वात् ब्रह्मणः अप्रामाणिकत्वं नास्तीत्यर्थः ॥ ३ ॥

समन्वयाधिकरणम् ॥ ४ ॥

शास्त्रप्रमाणकत्वे हेतुं वदन्नेव अनुमानादिप्रमाणकत्वं निराकरोति—

तत्तु समन्वयात् ॥ ४ ॥

तत् ब्रह्म शास्त्रप्रमाणकं, कुतः ? समन्वयात् 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुत्या उपक्रमोपसंहारादिलिङ्गैश्च सर्वेषां वेदान्तानां ब्रह्मण्येव तात्पर्यनिर्णयादित्यर्थः । तुशब्देन अनुमानादिप्रमाणकत्वं निरस्यति । 'नावेदविन्मनुते तं बृहन्तम् । नैषा तर्केण मतिरापनेया' इत्यादिश्रुत्या अनुमानादिप्रमाणकत्वस्य निरस्तत्वात् । 'न चक्षुषा गृह्यते' इत्यादिश्रुत्या प्रत्यक्षादिप्रमाणकत्वस्य च निरस्तत्वेन परिशेषात् शास्त्रप्रमाणकत्वं ब्रह्मणो निश्चीयत इत्यर्थः ॥ ४ ॥

ईक्षत्यधिकरणम् ॥ ५ ॥

ब्रह्मणः शास्त्रप्रमाणकत्वं प्रसाध्य प्रधानस्य स्वातन्त्र्येण जगत्कारणत्वं निराकरोति 'ईक्षतेर्नाशब्दम्' इत्यादिना 'श्रुतत्वाच्च' इत्येवमन्तेन[1] सूत्रसंदर्भेण—

ईक्षतेर्नाशब्दम् ॥ ५ ॥

अशब्दं शब्दाप्रतिपाद्यं प्रधानं जगत्कारणं न भवति । कुतः ? ईक्षतेः 'तदैक्षत' इति श्रुतौ जगत्कारणस्य ईक्षितृत्वश्रवणात् जडस्य प्रधानस्य ईक्षितृत्वासंभवादित्यर्थः ॥ ५ ॥

अप्तेजसोरिव प्रधानस्यापि गौणमीक्षणं संभवतीत्याशङ्क्य निराकरोति—

गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

ईक्षतिशब्दो गौण इति चेन्न । आत्मशब्दात् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति श्रुतौ जगत्कारणे आत्मशब्दप्रयोगात् मुख्यमेवेक्षणं न गौणमित्यर्थः ॥ ६ ॥

ब्रह्मैव जगत्कारणमित्यत्र हेत्वन्तरमाह—

तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

'तस्य तावदेव चिरम्' इति श्रुतौ जगत्कारणध्याननिष्ठस्य मोक्षोपदेशात् जडप्रधानध्यानेन मोक्षासंभवादित्यर्थः ॥ ७ ॥

---

१ अध्यायपरिसमाप्तिपर्यन्तेन सूत्रसंदर्भेणेति पाठः ।

स्थूलारुन्धतीन्यायेन प्रथमं प्रधानध्यानं कृत्वा पश्चात् ब्रह्मध्यानं कुर्वतो मोक्षो भविष्यतीत्याशङ्क्य निराकरोति—

**हेयत्वावचनाच्च ॥ ८ ॥**

हेयत्वस्य निषेधस्य अवचनात् अनुक्तेरित्यर्थः । न प्रधानध्यानान्मोक्ष इति निषेधाकथनात् स्थूलारुन्धतन्यायेनापि न प्रधानस्यावकाश इत्यर्थः ८

ब्रह्मणो जगत्कारणत्वे हेत्वन्तरमाह—

**स्वाप्ययात् ॥ ९ ॥**

'सता सोम्य तदा संपन्नो भवति' इति श्रुतौ सुषुप्तिकाले सर्वेषामन्तः-करणविशिष्टानां जीवानां स्वाधिष्ठाने लयश्रवणाज्जडप्रधाने चेतनानां जीवानां लयासंभवात् ब्रह्मैव जगत्कारणमित्यर्थः ॥ ९ ॥

हेत्वन्तरमाह—

**गतिसामान्यात् ॥ १० ॥**

गतिः तात्पर्यं, सर्वेषां वेदान्तानां ब्रह्मणि तात्पर्यसाम्यादित्यर्थः ॥१०॥

**श्रुतत्वाच्च ॥ ११ ॥**

' यः सर्वज्ञः सर्ववित् ' इत्यादिश्रुतौ जगत्कारणस्य सर्वज्ञत्वश्रवणाच्च ब्रह्मैव जगत्कारणमित्यर्थः ॥ ११ ॥

आनन्दमयाधिकरणम् ॥ ६ ॥

**आनन्दमयोऽभ्यासात् ॥ १२ ॥**

'अन्योऽन्तर आत्माऽऽनन्दमयः' इति श्रुतौ आनन्दमयः परमात्मैव, न जीवः । कुतः ? अभ्यासात् आनन्दशब्दस्य बहुश्रुतिषु ब्रह्मण्येव प्रयोगदर्शनादित्यर्थः ॥ १२ ॥

**विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥**

मयट्प्रत्ययस्य मृण्मयो घट इत्यादौ विकारवाचकत्वान्निर्विकारस्य ब्रह्मणः आनन्दविकारत्वासंभवात् आनन्दमयः न परमात्मेति चेन्न । प्राचुर्यार्थेऽपि ' अन्नमयो यज्ञः ' इत्यादौ मयट्प्रत्ययविधानात् आनन्दप्र-चुरत्वस्य ब्रह्मण्यपि संभवादित्यर्थः ॥ १३ ॥

**तद्धेतुव्यपदेशाच्च ॥ १४ ॥**

' को ह्येवान्यात् कः प्राण्यात् ' इति श्रुतौ सकलजीवानन्दहेतुत्वस्य व्यपदेशादपि आनन्दमयः परमात्मेत्यर्थः ॥ १४ ॥

